भुवनमसि ॥ इति भूतिमाशास्ते ॥ विप्रथस्व ॥ इति प्रथयत्येवैनं दित्त इन्द्रस्तिष्ठन्वीर्यमकृणोद्देवताभिः समारभ्येत्यतो हीन्द्रस्तिष्ठन्वी३र्यमकृणोद्देवताभिः समारभ्य ॥ जुह्वेह्यग्निष्ट्वा ह्वयति देवान्यक्ष्यावो[1] देवयज्याया उपभृदेहि देवस्त्वा सविता ह्वयति देवान्यक्ष्यावो देवयज्यायै ॥ इति न वा एते अविदुषा स्वादाने इव वरुणपाशा३न्ह्याक्रामत्येताभिरेने[2] देवताभिरादत्ते वरुणपाशानामनाक्रमाय विष्णोः क्रमो ऽसीत्यतिक्रामति यज्ञस्यानवक्रामायोर्ध्वो अध्वरो दिविस्पृगहुतो यज्ञो यज्ञपतेरित्यृजुमूर्ध्वमाघारमाघारयति यज्ञस्याहूर्छायेन्द्रवान्स्ववानिति[3] सेन्द्रं यज्ञमकर्तायो इन्द्रियं तेनावरुन्धे ॥ वसुमतस्ते छायामुपस्थेषम् ॥ इत्यग्निर्वै वसुमानग्नेरेव छायामुपतिष्ठत ऋजुमूर्ध्वमाघारमाघारयेत्प्राणो वा आघारः सर्वमायुर्यजमान एति यं द्विष्यात्तस्याघार्य कृधु छिन्द्यात्प्राणमस्य छिनत्ति ताजक्प्रमीयते शिरो वा एतद्यज्ञस्य यदाघार आत्माज्यं यदाघारमाघार्योपभृता समञ्ज्याच्छिरो[5] यज्ञस्य प्रच्छिन्द्यादाज्यधान्या समनक्ति ॥

संमक्तमग्निना हविः संमक्तं हविषा घृतम् ॥ इत्यात्मन्यज्ञस्य शिरः प्रत्यधाद्यो मन एव यज्ञे प्रतिदधाति स्तनं स्तनिनीः[6] प्रजा उपजीवन्ति किमस्तना इति ब्रह्मवादिनो वदन्त्यग्रुभी[7] रिहाणा व्यन्तु वया इत्येतद्वाव ता उपजीवन्ति वशा पृश्निर्भूत्वा मरुतो गच्छेति मरुतो वै वृष्ट्या ईशते ते ऽस्मै[8] वृष्टिं निनयन्ति ततो नो वृष्ट्यावतेति

---

1) So corrigirt; M यक्षावो; B यक्ष्म्रावो; Bb यक्ष्वावो; H undeutlich. 2) So M; die andern Mss. ॰रेनं 3) So M; in H u. Bb ॰स्वाहूर्छाये॰; B ॰स्वाहूर्छाये॰ 4) So M; in H, Bb u. B विछिनत्ति 5) Der Accent des Verbums ist von mir gesetzt; in M ist dasselbe ohne Accent; in H u. Bb संमञ्ज्यात् 6) So M; in H u. Bb स्तनिना; B स्तनिनी 7) Bb ॰ग्रुर्तुभि 8) So M; in H u. Bb तस्मै; desgl. B, ohne Accent.

मरुद्भ्य एव वृष्टिं[1] वनुते चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहीति चक्षुरेवास्य पाति श्रोत्रपा अग्नेऽसि श्रोत्रं मे पाहीति श्रोत्रमेवास्य पाति तनूपा अग्नेऽसि तन्वं मे पाहीति तन्वमेवास्य पाति यन्मे अग्न ऊनं तन्वस्तन्म आपृणेत्याशिषमेवाशास्ते ॥

यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमानः ।
तं त एतमनु जोषं भरामि नेदेष युष्मदपचेतयातै[2] ॥

इति यजुषैव युज्यन्ते यजुषा विमुच्यन्ते संस्रावभागाः स्थेषा बृहन्ता इति परिधीन्प्रहृत्याभिजुहोत्यग्नयो वा एते तान्प्रीणाति ताञ्छमयति भागधेयेन ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद्यो यतो यज्ञं प्रयुङ्क्ते तत्प्रतिष्ठापयतीति देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पते सुधात्विमं यज्ञं दिवि देवेषु वाते धाः स्वाहेत्यतो वा अध्वर्युर्यज्ञं प्रयुङ्क्ते तदेवैनं प्रतिष्ठापयति ॥ १४ ॥

, 13. — TBr. 3, 3, 7, 5—11; Kâth. 31, 11; Kap. S. 47, 11.

॥ इति[3] खिलकाण्डे प्रथमः प्रपाठकः ॥

---

प्रजापतिर्वा एक आसीत्सोऽकामयत बहुः स्यां प्रजायेयेति स मनसात्मानमध्यायत्सोऽन्तर्वाण्यभवत्स विजायमानो

---

1) Für die wechselnde Betonung von वृष्टि (वृष्टि in Versen und Sprüchen, वृष्टि in der prosaischen Erzählung oder Erörterung) vgl. oben 2, 4, 7 u. 8; 2, 11, 4 u. 5. 2) So M; in H u. Bb °चेतयातैः; desgl. B, ohne Accent. 3) Das इति fehlt in den Mss.

गर्भेणातताम्यत्स तान्तः कृष्णः श्यावो ऽभवत्तस्मात्तान्तः कृष्णः श्याव इव भवति तस्य वा असुरेवाजीवत्तेनासुनासुरानसृजत तदसुराणामसुरत्वं स यस्तदसुराणामसुरत्वं वेदासुमान्ह भवति नैनमसुर्जहाति सो ऽसुरान्सृष्ट्वा पितेवामन्यत तेन पितॄनसृजत तत्पितॄणां पितृत्वं स यस्तत्पितॄणां पितृत्वं वेद पितेव ह समानानां भवति यन्त्यस्य पितरो हवं तस्मै पितॄन्ससृजानाय दिवाभवत्तेन देवानसृजत तद्देवानां देवत्वं स यस्तद्देवानां देवत्वं वेद दिवा ह वा अस्मै देवत्रा भवति यन्त्यस्य देवा देवहूतिं स देवान्सृष्ट्वामनस्यतेव तेन मनुष्यानसृजत तन्मनुष्याणां मनुष्यत्वं स यस्तन्मनुष्याणां मनुष्यत्वं वेद मनस्वान्ह भवति नैनं मनो जहात्युत यदतीव वदत्यति वा चरति तिष्ठन्ते ऽस्य मनुष्या मनुषे ततो या योनिरुदशिष्यत सा गौरभवद्योनिर्वै नामैषैतद्वा अस्याः प्रत्यक्षं नामाथो आहुः परोक्षमिति प्र सहस्रं पशूनाप्नोति य एवं वेद तस्यां वै पयः पर्यपश्यंस्तां[3] देवा अदुह्र हरितेन पात्रेणामृतं दुह्रे ऽमृतं य एवं वेदाथ पितरो ऽदुह्र रजतेन पात्रेण स्वधां दुह्रे स्वधां य एवं वेदाथ मनुष्या अदुह्र दारुपात्रेणान्नं ववृं दुह्रे ऽन्नं ववृ य एवं वेदाथासुरा अदुह्रायस्पात्रेण स्रवता सुरां ते ऽस्रवन्स्रवत्यस्य भ्रातृव्यो य एवं वेद तस्मात्स्रवता न हस्ता अवनेनिजीत न पिबेदेते वा अस्या दोहाः सर्वैरेवास्या दोहैः सर्वैः कामैर्भुङ्क्ते य एवं वेद चत्वारि वै नभां-

1) So ist dieser Satz wohl zu schreiben; in M eigentlich यदतीवावदत्यतिवाचरती, dann wie es scheint corrigirt in यदतीव वदत्यतिव चरतो; in H u. Bb यदतीवा व-दत्यतीव चरत; in B ebenso, nur ohne Accent, und am Schluss चरति 2) So M, in H u. Bb °रुदशिष्यत; B °रुद्रशिष्यत 3) Die Mss. schreiben तान् 4) In M ohne Accent, weiter unten aber betont. Ich vermuthe वर्षि, ebenso auch weiterhin वर्षि; cf. 4, 2, 8.

सि देवाः पितरो मनुष्या असुराः सर्वेषु ह वा एतेष्वम्भो नभ इव भवति य एवं वेद ता वा अकामयन्त मयि स्यान्मयि स्यादिति तां[1] देवाः काम्ये ॥ इत्याह्वयन्सा वा एनानभ्यकामयतोभये ह वा एनं देवमनुष्या[2] अभिकामयन्ते वारुका एनमार्त्विज्ये भवन्ति य एवं वेद ॥ श्रव्ये ॥ इति मनुष्याः सा वा एनानशुश्रूषतोभये ह वा एनं देवमनुष्याः शुश्रूषन्ते पूर्वास्य जनतामायतः कीर्तिरागच्छति य एवं वेद[3] ॥ इलान्दे ॥ इति पितरस्तेभ्यो वा अतिष्ठत तिष्ठन्त्यस्मिन्पशवो[4] य एवं वेदाथ यथासुरा आह्वयंस्तेभ्यो वा अचसद्ध्विषात्तस्य तथा गोष्ठ आह्वयेदंसन्त्यस्मात्पशव[5] एतैरेव जुहुयात् ॥ गोनामैः संसृज्या गोर्मूर्धन्पशुकामः ॥ काम्यायै स्वाहा श्रव्यायै स्वाहेलान्दायै स्वाहा ॥ इति गोष्ठो वै नामैषां लक्ष्मीः स्वं[6] वा एतद्गोष्ठे यजमानो भ्रातृव्यस्य पशून्वृङ्क्त एतैर्वै ते ता अवृञ्जत तैरेवैना वृङ्क्ते संसृङ्गी भवति पशूनां परिगृहीत्यै यो वै चक्षुषो विभक्तिं वेद चक्षुष्मान्ह भवति नैनं चक्षुर्जहाति यद्दिवा पश्यामस्तद्देवानां चक्षुषा पश्यामोऽसौ वा आदित्यो देवानां चक्षुः पश्यन्ह वै देवचा करोति प्र देवयानं पन्थां जानाति य एवं वेद यज्ज्योत्स्नायां पश्यामस्तत्पितृणां चक्षुषा पश्यामश्चन्द्रमा वै पितृणां चक्षुर्न ह वा एनममुष्मिंल्लोके चक्षुर्जहाति प्र पितृयाणं पन्थां जानाति य एवं वेद यत्तमिस्रायां पश्यामस्तन्मनुष्याणां चक्षुषा पश्याम एतावद्वाव नः स्वं[7] चक्षुर्न ह वा एनमस्मिंल्लोके चक्षुर्जहाति सर्वमायुरे-

1) Die Mss. schreiben तान् 2) So corrigirt; die Mss. देवमनुष्या; vgl. aber weiter unten, sowie namentlich auch 4, 2, 7; 4, 2, 13; 3, 8, 4. 3) H u. Bb वेदा 4) In H u. Bb ist das Pronomen betont अस्मिन् 5) So die Mss.; man könnte vermuthen आह्वयेत् पंसव्यसात् 6) In den Mss. dies Wort ohne Accent. 7) M स स्वं; H u. Bb; स्वंत्; desgl. B, ohne Accent.

ति य एवं वेद यदमौरन्ते पश्यामस्तदसुराणां चक्षुषा पश्यामा उश्च वा एष दीप्यते नि च रिष्यति दीप्यमानं भ्रातृव्यस्य गृहाद्धरेद्रयिमेवास्य पुष्टिं हरत्यां तु सूर्यस्योदेतोर्जागृयाद्यत्सत्यादार्तिमार्छेत्संजागरितव्यं[2, 3] रयिमेव पुष्टिमनुजागर्ति ॥ १ ॥

यो वा इडां धेनुं वेद सर्वा ह वा अस्मै दिशो धेनवो भवन्ति सर्वे प्रतिजना दानकामास्तामिष्वाशनीरामिचशोचनिर्विदांचकार तस्मै सर्वा दिशो धेनवो ऽभवन्त्सर्वे प्रतिजना दानकामास्तस्मात्स सर्वैः प्रतिजनैर्ध्यवहृतोपजनन्त्सन्त्सर्वा[6] ह्यस्मै दिशो धेनवो ऽभवन्त्सर्वे[7] प्रतिजना दानकामास्तद्य एवं वेद सर्वा एवास्मै दिशो धेनवो भवन्ति सर्वे प्रतिजना दानकामास्तस्या वा इयमेव पादो ऽन्तरिक्षं पादो द्यौः पादः समा पादो ऽपो आहुः कृषिः पादा इति तेन प्रति त्वदानीं[8] तिष्ठति न त्वदानीं[9] यदा सुसस्यं भवत्यथ प्रतितिष्ठति यदा न सस्यं भवत्यथ न प्रतितिष्ठति भवति ह वा अस्य सस्यं नास्य सस्यं व्यृध्यते य एवं वेद तस्या[10] वा अदं एवं पृष्ठमन्तरिक्षमात्मा यमुरो दिशः पार्श्वे समुद्रौ कुक्षी असा आदित्यः[11] शिरो ऽग्निराऽस्यं वातः प्राणो गायत्र्यभिधानी सर्वमायुरेति य एवं वेदो धरुत्तरवेदिः पवमानो वत्स एष वा एनां[12] प्रस्तौति

1) Bb निस्वरिष्यति oder निस्वरिष्यति; 2) सत्वाह् habe ich mit M geschrieben; H u. Bb स्वत्वाह्; desgl. B, ohne Accent. 3) Den Accent von जागरितव्यं habe ich corrigirt; M schreibt जागरितव्यं; H u. Bb जागरितव्यं 4) So M; desgl. B, ohne Accent: in H u. Bb तामिषावाशनीरामिषशोचनि॰ 5) So M; H u. Bb भवति; desgl. B, ohne Accent. 6) So M! In H u. Bb व्यवहृतोपजनंत्स सर्वा; in beiden Mss. könnte übrigens auch die erste Silbe व्य betont sein; B ebenso, nur ohne Accent. 7) So M; H u. Bb भवति; desgl. B, ohne Accent. 8) So M! H प्रति त्वदानीस; Bb प्रति त्वदानीस्; desgl. B, ohne Accent. 9) So M; in H u. Bb न त्वदानीं; desgl. B, ohne Accent. 10) B तस्य 11) Bb असावादित्यः 12) M एनाम्

प्रशान्ह[1] वा इमांल्लोकान्दुहे य एवं वेद बृहद्रथन्तरे द्वौ स्तनौ वामदेव्यं च यज्ञायज्ञियं च द्वा ओषधीरेव देवेभ्यो रथन्तरेणादुह पशून्बृहतापो वामदेव्येन यज्ञं यज्ञायज्ञियेन तद्य एवं वेदौषधीरेवास्मै रथन्तरेण दुहे पशून्बृहतापो वामदेव्येन यज्ञं यज्ञायज्ञियेनेडा वा इदं सर्वं स सहस्रं पशून्प्राप प्र सहस्रं पशूनाप्नोति य एवं वेद ॥ २ ॥

यत्र प्राचीनप्रवणं समूलं भूम्या स्यात्तदुपोदये सूर्यस्य हस्ता अवनिज्य दर्भैस्तच्च उदशरावे निनयेत्कामंकामं[2] मा आवर्तय ॥ इति कामिनेवास्मै काममावर्तयति यत्कामो भवति यो वै कामं साक्षाद्वेद ताजग्घ[3] वा एनं स[4] कामा आगच्छति यत्कामो भवति पशुषु वा अस्माकं कामः पशूनामोषधीष्वौषधीनामप्स्वोषधी रेव कामेन समसाट् ता अस्मै कामं समर्धयन्ति यत्कामो भवत्याप[5] एवा स्या वा एष वम्रिरुत्सृष्टश्चरति[6] लोमशो लोमशायास्तस्मादेषां शाश्वसत्येव[7]र्य उर्वस्या आउस्य वातः प्राणो यत्र गोभिः संगछेत तद्भूयात्[8] ॥ प्रशस्ताः स्थ कल्याण्यः ॥ इतीयं वा एषेमा वा एतान्सभागयत्यथासुका अस्मात्पशवो भवन्ति य एवं वेद देवाश्च वा असुराश्चास्पर्धन्तादितिर्देवेष्वासीत्कुस्तासुरेषु[9] ते देवा अमन्यन्त

1) So corrigirt; H u. Bb प्रस्तान् (desgl. B, ohne Accent); M प्रस्ता॰ 2) So corrigirt; M कामकामं; H u. Bb कामंकामं 3) So corrigirt; M ताजन् ह; H u. Bb ताजन् ह; desgl. B, ohne Accent. 4) So corrigirt; in den Mss dies Wort ohne Accent. 5) So corrigirt; M भवत्याप; H u. Bb भवतीप; desgl. B, ohne Accent. 6) So wohl zu schreiben; M वभ्रुर॰; B वम्रोर॰; H u. Bb वम्रोर॰ 7) So meine Correctur; H u. Bb शांश्वसीत्यपि॰; desgl. B, ohne Accent; M शांश्वसीत्यपि॰ 8) So M; H u. Bb संगच्छेतेर्संत प्रयात्; B ebenso, nur ohne Accent. 9) Vgl. zu dem Namen dieser Unholdin die कुस्तिताची 2, 1, 11; 3, 2, 6.

यद्यभिजेष्यामः कुस्तायाः शिर आहनिष्यामा इतिˇ यद्यभिजेष्यामाˇ इत्यसुरा अमन्यन्तादित्याः शिर आहनिष्यामा इतिˇ तां देवा अभिजित्याघ्नतˇ यस्य वै जितं यस्य विजितं तस्यैषा[1] गृहे हन्यतˇ एषा वै क्षुत्ˇ क्षुधं वा एतद्धतेˇ तद्य एवं विद्वानेकाष्टकायां गां हते संवत्सरायैव क्षुधं हतेˇ प्रजापतिर्वा एक आसीत्सो ऽकामयतˇ बहु मनु[2] स्यां[3] प्रजायेयेतिˇ स आत्मानमैट्टˇ स मनो ऽसृजतˇ तन्मन एकधासीत्तदात्मानमैट्टˇ तद्वाचमसृजतˇ सा वागेकधासीत्सात्मानमैट्ट[4]ˇ सा विराजमसृजतˇ सा विराडेकधासीत्सात्मानमैट्टˇ सा गामसृजतˇ सा गौरेकधासीत्सात्मानमैट्टˇ सैडामसृजतˇ सैडेकधासीत्सात्मानमैट्टˇ सेमान्भोगानसृजत यैरस्या इदं मनुष्या भुञ्जत एते वा अस्या भोगाःˇ सर्वैरेवास्या भोगैः सर्वैः कामैर्भुङ्क्ते य एवं वेदˇ गौर्वै वाग्गौर्विराड्ˇ गौरिडाˇ गौः खल्वेव गौर्गौरिदं सर्वंˇ सर्वा ह वा एनमेताः श्रयन्ते य एवं वेदˇ यद्वै तदात्मानमैट्ट[5] सैडाभवत्तदिडाया इडात्वंˇ स यस्तदिडाया इडात्वं वेदेट्टे ह वै स्वमात्मानं भूत्यै ॥ ३ ॥

Vgl. Mân. Çr. 9, 5, 1.

या रोहिणी तामरुणाˇ तां गौरीˇ तां बभ्रूः ॥ तदिन्द्रा उदाजत वसुर्नाम रूपं पशूनाम् ॥[6] विन्दते वसुˇ न वसु रुणद्धि य एवं वेदˇ या शितिपृष्ठा तां मन्दिस्तां मैनीˇ तां शबलीˇ तां शितिबाहुस्तां शुद्धवाला ॥ तद्बृहस्पतिरुदाजतैडा नाम रूपं पशूनाम् ॥[7] बह्वीर्ह वा एनमिडाः श्रयन्ते य एवं वेदˇ या पृषती तां पिशङ्गीˇ तां सारङ्गीˇ

---

1) H u. Bb तस्यैषा 2) So die Mss.! Vielleicht बहुमनुः zu schreiben. 3) In M eigentlich स्यात् geschrieben, aber am Rande, wie es scheint, in स्यां corrigirt, (oder स्याम्?). 4) Bb मैट्ट 5) So corrigirt; in den Mss. das Verb ohne Accent. 6) M interpunctirt so; die andern Mss. पशूनां, ohne Interpunction. 7) Nur M hat hier Interpunction.

तां कल्माषी तां पृश्निस्तां श्वेता ॥ तन्मरुता[1] उदाजन्त ज्योतिर्नाम रूपं पशूनाम् ॥ ज्योतिष्मान्भवति य एवं वेद या सुरूपा तां श्यामा तां श्येनी तां कृष्णा[2] ॥ तत्प्रजापतिरुदाजतायुर्नाम रूपं पशूनाम् ॥ आयुष्मान्भवति य एवं वेद चतस्रः प्रथमाश्चतस्र उत्तमा द्विः षण्मध्यतस्ता द्विर्दश दशाक्षरा विराड् वैराजाः पशवः पशूनेवावरुन्द्धे ॥ वस्व्यै हिंकुरु तस्यै प्रस्तुहि तस्यै मे ऽवरुद्ध्यै ॥ इति पुरस्ताद्बहिःपवमानस्य वदेत् ॥ इडायै हिंकुरु तस्यै प्रस्तुहि तस्यै मे ऽवरुद्ध्यै ॥ इति पुरस्तादाज्यानां वदेत् ॥ ज्योतिषे हिंकुरु तस्यै प्रस्तुहि तस्यै मे ऽवरुद्ध्यै ॥ इति पुरस्तान्माध्यंदिनस्य पवमानस्य वदेत् ॥ आयुषे हिंकुरु तस्यै प्रस्तुहि तस्यै मे ऽवरुद्ध्यै ॥ इति पुरस्तादार्भवस्य पवमानस्य वदेत् ॥ यज्ञो वै पशूनामायतनं स्वे वा एतदायतने यजमानो भ्रातृव्यस्य पशून्वृङ्क्ते ऽनपक्रामुका अस्मात्पशवो भवन्ति ॥४॥

वसीयस्यैहि श्रेयस्यैहि भूयस्यैहि चित्ता एहि दधृषेहीडा एहि सूनृता एहि चिदसि मनासि धीरसि वस्वी रन्तिः सुमनाः ॥ सूनरि[4] विश्वा त्वा भूतान्यनुप्राणन्तु विश्वा त्वं भूतान्यनुप्राण भूयस्यायुरसी स्थिरसि संरूपवर्षा एहि ॥

एमामनु[5] सर्पतेमौ भद्रौ धुर्या अभि ।
नीव[6] शीर्षाणि मृद्ध्वम् ॥

सा नः सुप्रतूर्तिः प्रिया नः सुहार्णः[7] प्रियवनिर्मघवनिरन्ता एहि

---

1) So M; in H u. Bb ॰न्मरुतां उदाजन्ता; desgl. B, ohne Accent. 2) M कृष्णायत्
3) So meine Correctur; die Mss schreiben वस्ती 4) So meine Correctur; M सूनरि; H u. Bb सूनरी; desgl. B, ohne Accent. 5) In den Mss. ॰मनु ohne Accent.
6) So M; in H निहीव; Bb u. B निहीव 7) D. h. सुहार्दः नः

जुष्टा एहीडा एह्यदिता एह्युपहूत उपहवं ते ऽशीय सुहवा ना एहि सह रायस्पोषेण देवीर्देवीरभि मा निवर्तध्वम् ॥

स्योना स्योनेन घृतेन मा समुक्षत ॥
नमे तदुपदम्भिषर्धृषिर्ब्रह्मा[1] यद्दौ ।
समुद्रादुदजनि वः स्रुचा[2] ॥
वार्त्ये विप्रस्य तिष्ठति शृङ्गेभिर्दशभिर्दिशम्[3] ॥ ५ ॥

Vgl. Mân. Çr. 9, 5, 1.

वसीयस्येहीति ब्रह्म वै वसीयो ब्रह्म वा एतदत्याह्वयति श्रेयस्येहीति क्षत्रं वै श्रेयः क्षत्रं वा एतदत्याह्वयति भूयस्येहीति विड्वै भूयसी विशं वा एतदत्याह्वयति चित्ता एहीति मनो वै चित्तं मनो वा एतदत्याह्वयति दधृष्येहीति वाग्वै दधृषि वाचं वा एतदत्याह्वयतीडा एहीति पशवो वा इडा पशून्वा एतदत्याह्वयति सूनृता एहीत्यन्नं वै सूनृतान्नं वा एतदत्याह्वयत्येता वै सप्त देवगव्यस्ताः कीतो वैतहोत्रो विदांचकार ताभिरदः कुरूणां कौन्तेः[4] पशूनत्याह्वयत्ताः कुरवो ब्राह्मणेष्वन्वैच्छंस्ताः कुमारवत्याश्वदक्षिणा अविन्दन्त्सो[5] ऽब्रवीन्मा सूक्ष्यतैताभिर्वा अहमेता अत्याह्वयिष्यामीतराभिरितरा यानि खलु वा एतासां प्रियाणि धामानि तानि कीतो न वेदेति स संयत्ते संग्रामे छदिर्दर्शे एताभिरेवैता अत्याह्वयिष्यामीतराभिरितरा यतरं खलु वा एता अत्याहूयन्ते तत्पशवो ऽभिसंक्रामन्ति यत्र पशवस्तद्दे-

1) So M; in H u. Bb तदुपदंभिषेर्धृषि॰; desgl. B, ohne Accent; cf. 4, 2, 8. 2) So M; in H u Bb स्रुचा; desgl. B, ohne Accent. 3) So M; in H u. Bb दशभिर्दश; desgl. B, ohne Accent. 4) So M; in H u. Bb कुरुणां कौर्ते; desgl. B, ohne Accent; 5) So M; in H u. Bb अविंदन् ग्रो; B अविंदत्सो

वा यत्र देवास्तदिन्द्रो यतरान्वा एते ऽभिसंक्रामन्ति ते जयन्ति जयति संग्रामम् ॥ ६ ॥

Vgl. Mân. Çr. 9, 5, 1.

सा वै सृष्टाभयान्देवमनुष्यानत्यमन्यत तां देवा दर्शपूर्णमासाभ्यामुपप्रास्तृणत[1] तां वा एतदाप्नुवन्यदिडां तां वा एतदाप्ना हरन्तो मन्यन्ते यदिडामुपह्वयन्ते यर्हि तूष्णीमुपह्वयेत[2] तर्ह्येताः सप्त वदेद्धेनुवैस्तद्धेनुतराः सप्त धाम धामासा वर्णं वर्णमुपगछन्त्यो ह वा एनमप्रतिख्याता[3] गछति य एवं वेद यत्र स मूला[4] ओषधीरुपगछेत्पशून्वा तदेता एव सप्त वदेद्धाम धामासा वर्णं वर्णमुपगछन्त्यो ह वा एनमप्रतिख्याता[5] गछति य एवं वेद सप्त स्ववीर्येण[6] याजयेद्यस्य सप्त स्युर्विराड्वरमा मन्तमा[7] स्युर्वसीयस्यैहि श्रेयस्यैहीत्येतदेतदेवास्या अत्याह्वयति यो वैश्यः[8] शूद्रो वा बहुपुष्टः स्यात्तस्य गवां साण्डं वत्सतरमपमयेत्[9] ॥ इलान्दाः स्थ ॥ इतीलान्दा हि पशवः पूष्णो नक्षत्रं पोषयिष्णु ॥ इति विश्येषु वा एतच्चरति पूष्णो नक्षत्रं पोषयिष्णु तदेवापधापयते तमपाकुर्वीत ॥ आयुर्मे दा वर्चो मे दा रयिं मे दाः पुष्टिं मे दाः ॥ इति रयिमेवास्य पुष्टिं हरति तमितो ऽभिसृज्याथे[10]३तो ऽत्याह्वयेद्वसीयस्यैहि श्रेयस्यैहीत्येतदेतदेवास्या अत्या-

---

1) So corrigirt; M प्रात्स्तृणत; H u. Bb प्रात्सृणत; desgl. B, ohne Accent. 2) Die Mss. °मुपह्वयेत; cf. aber unmittelbar vorher. 3) So corrigirt; M °मप्रतिषातं; H u. Bb °मप्रतिक्ष्यातं; B °मप्रतिक्ष्यात 4) So M; desgl. B, ohne Accent; in H u. Bb समूलाला 5) So corrigirt; M °मप्रतिषातं; H u. Bb °मप्रतिक्ष्यातं; B °मप्रतिक्ष्यातं 6) So die Mss. 7) So H u. Bb; desgl. B, ohne Accent; M स्युर्विराड्वरमामंतमा 8) Dies Wort in den Mss. ohne Accent. 9) So M; in B °मुपमयेत्; Bb मुपमयेत्; in H ursprünglich °मुपमयेत् geschrieben, dann in मुपमयेत् corrigirt. 10) So M; in H u. Bb °पिसृज्या; desgl. B, ohne Accent.

ह्वयति नास्य किंचनोदशिषद्[1] ग्रामकामं याजयेत्सारस्वतं चरुं गव्यां संवत्सरो वै सरस्वान्संवत्सरेणैवास्मै ग्रामं च्यावयति व-सीयस्येहि श्रेयस्येहीत्येतदेतदेवास्या अन्वाह्वयति पशुकामं याज-येत्सारस्वतं चरुं गव्यां संवत्सरो वै सरस्वान्संवत्सरेणैवास्मै पशूं-श्च्यावयति वसीयस्येहि श्रेयस्येहीत्येतदेतदेवास्या अन्वाह्वयति सर्वा-सां दुग्धे चतुःशरावमोदनं पचेद्ब्राह्मणेभ्यः पशुकामो यच्चतुःशरावो दिग्भ्य एवास्मै तेन पशूनवरुन्धे ब्राह्मणेभ्यो ब्रह्मणस्तेन न छिन्नं देयं पशुकाम इव ह्यश्वं वासो हिरण्यं वा देयमीजानस्यास्य पश-वो भूयांसो भवन्ति ॥ ७ ॥

Vgl. Mân. Çr. 9, 5, 1.

प्रजापतिर्वै न व्याहरत्स आत्मन्येव पुण्यमायच्छदात्मनः पुण्यं न निरवदद्देतर्ह्ये[5] तद्यजुर्वेदत्वान्यथा ब्रूयात् ॥ पुण्यं प्रशस्तम् ॥ इति ब्रू-यादात्मन्येव पुण्यं यच्छत्यात्मनः पुण्यं न निर्वदति ग्रामदानीयाय ददाति तामस्य पशवो ऽन्वपक्रामन्ति यदि मन्येतादानीयायादामि-त्येतदेव[6] यजुर्वेदेऽमे तदुपदभिषर्धूमिब्रह्मा[7] यद्दा इति तदेवैतेना-पूरयति तदाप्याययति समुद्र इव ह वा अस्य व्यच्यमानो[8] न क्षीयते य एवं वेद ॥ वीरवतीर्भूयास्त या नो वीरवतो ऽकर्त[9] ॥ इति पुं-मांसं जातमभिमन्त्रयेत ॥ भूयसीर्भूयास्त या नो भूयसो ऽकर्त ॥ इति स्त्रियं जाताम् ॥ अन्नादा भूयास्त ये नो ऽन्नादानकर्त[10] ॥ इति

1) So M; in H, Bb u. B °शिषत्. 2) Bb सरस्वान्संवत्सरेणैवास्मै 3) So B; in M, H u. Bb °वावयति 4) M छिन्नं देयं 5) Die Mss. निरव° 6) M °नीयायादा° 7) So M, cf. 4,2,5; in H u. Bb °दुपदभिष धूमि ब्रह्मा; desgl. B, ohne Accent. 8) So B, ohne Accent; H u. Bb व्यच्यमानो; M व्यच्यमानो 9) H, Bb u. B कर्त्ता 10) So M; H u. Bb °दनकर्त्ता; desgl. B, ohne Accent.

कर्णीः क्षिप्रं बह्वीर्भवन्ति यद्यस्तेनानरूपनमतीव[1] निर्ऋत्याः छिद्रकर्ण्यो यच्छिद्रकर्णीः[2] कुर्वीत निर्ऋतिरस्य पशोर्निगृह्णीयाद्व प्रछिन्द्या कर्ण्यः काण्यो न दात्राकर्ण्यः पराचीनमिव हि तन्निवृत्तमंगस्त्यस्य विष्ट्यकर्ण्यः कश्यपस्य कम्बुन्युब्जस्ता[3] इन्द्रस्याक्रन्ता[4] अथो आहुः प्रजापतेरित्युभयं ज्येष्ठलक्ष्मं ज्यैष्ठ्यकामः कुर्वीत प्र समानानां ज्यैष्ठ्यमाप्नोति प्रजापतिः पशूनसृजत स वा असृगेव नासृजतासृष्टं वा एतत्सदक्ष्णो ऽसृक्ष्णं क्रूरं पशूनां कर्या इति वै सो ऽसृमासृजत क्रूरं वा एष पशूनां कुरुते यो ऽक्ष्णुते यदक्षितास्तेनाक्षिता अथ यदनक्षिता इति श्रूयन्ते तेनाक्षितास्तदाहुर्न वा एतमेता अनुवागछन्ति या अनक्षिता इति तस्मादक्षितव्या न तेजनेनाक्ष्णुयाद्वज्रो वै तेजनं यत्तेजनेनाक्ष्णुयाद्वज्रेण पशूनर्पयेन्न श्यामेनायसा क्रूरं तदशान्तमिक्षुकाण्डमप्सु वासयित्वा तेनाक्षितव्यास्तद्धि शिवं तच्छान्तमथो आहुर्लोहितेनायसेति तद्धि शिवं तच्छान्तम् ॥ ९ ॥

Vgl. Mân. Çr. 9, 5, 3.

इह प्रजा विश्वरूपा रमन्तामस्मिन्गोष्ठे विश्वभृतो जनित्रीः ।
अग्निं कुलायमभि संविशन्तीः संमासृजन्तु पयसा घृतेन ॥

इति गाः सायमायतीरभिमन्त्रयेताग्निर्वा एतासां योनिरग्निः कुलायं स्व एवैना योनौ स्वे कुलाये संवेशयति नास्य पशवो नक्तमार्तिमार्छन्ति य एवं वेद ॥

---

1) So ist vielleicht zu schreiben; die Mss. schwanken; M स्तेनानसूपनमतीव; H स्तेनानरूपनमतीव; Bb तैनानरूपनमतीव; B स्तेनानरूपनमतीव 2) So corrigirt; die Mss. क्षिद्र°; vgl. aber das unmittelbar Folgende, wo alle Mss. छिद्र° 3) So M; in H u. Bb कंबुन्युब्जस्ता; desgl. B, ohne Accent. 4) So M; Bb इंद्रस्याक्रान्तो; B इंद्रः स्याक्रान्तो; H इंद्रस्याक्रन्ता

सं वः सृजत्वर्यमा सं पोषा सं बृहस्पतिः ।
समिन्द्रो यो धनंजयः ।
संजग्माना अविहुता अस्मिन्गोष्ठे पुरीषिणीः ।
स्वावेशा[1] ना आगत ॥

इति गाः संसृजेद्या अस्य पुरा स्युर्याश्चान्यतो विन्देत पशवो वै घृतमग्नी रुद्रो यज्जुहुयाद्रुद्रायास्य पशूनपिदध्यात्तत्संमृज्या एवाभियीहे भूयसीर्भवन्ति सं वः सृजत्वर्यमेति यज्ञो वा अर्यमा यज्ञेनैवैनाः संसृजति सं पूषेति पुष्टिर्वै पूषा पुष्ट्यैवैनाः संसृजति सं बृहस्पतिरिति ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनाः संसृजति समिन्द्रो यो धनंजय इतीन्द्रियं वा इन्द्र इन्द्रियेणैवैनाः संमृजाति रेवती तन्तिः पृथिवी माता रेवतीरापा ओषधयः ॥ ता नो हिन्वन्तु सातये धिये जुषे[2] ॥ इति तन्तिं वितनुयात्तामनुमृज्यात् ॥ रय्यां त्वा पुष्ट्यानुमार्ज्मि ॥ इति रय्यैवैनां पुष्ट्यानुमार्ष्टि तस्या व्रतं न रिक्ता[3] स्यात्ताँ उपर्युपरि संचरेयुर्नाभिवर्षेन्नाभितपेदेतद्धै[4] वत्सौ रामकायनो[5] विदांचकार तन्त्या वितननं स सहस्रं पशून्प्राप प्र सहस्रं पशूनाप्नोति य एवं वेद ॥

पिता वत्सानां पतिरघ्न्यानामुतायं पिता महतां गर्गराणाम् ।
रेतोधां त्वा यशोधां रायस्पोषायोत्सृजेत् ॥

इत्यृषभस्य कर्ण उत्सृजमानो वदेद्रेतोधामेवैनं यशोधां रायस्पोषा-

---

1) Hier mit वेशा flg. beginnt die Hdschr. von Benares (Ben.), u. zwar mit p. 32. 2) M setzt hier eine २; die Interpunction fehlt in den Mss. 3) So Ben u. M (n. Bl., ohne Accent); H u. Bb रिक्त्वा; desgl. B, ohne Accent. 4) H u. Bb °नोभिवर्षे° 5) So Bb; desgl. M (n. Bl.), ohne Accent; die andern Mss. समकायनो; in H eigentlich समकायनो geschrieben, später in रामकायनो corrigirt.

योऽत्सृजते यो वैश्यः शूद्रो वा बहुपुष्टः[1] स्यात्तस्य गवां गोष्ठादेकविंशतिं शकान्याहृत्यैकविंशतिमाहुतीर्जुहुयादेकविंशतिर्वै मनुष्यलोका मनुष्यलोकेभ्य एवास्मै पशूनवरुन्ध एतैरेव जुहुयाद्गोनामैरयेत्वर्या गोर्भसदि पशुकामो मुखं वा एष पशूनां मुखत एवास्मै पशूनिनयति ॥ १० ॥

Vgl. Mân. Çr. 9, 5, 3.

यासामिन्द्र उदाजत वसु नाम रूपं पशूनामुषसं[2] धाम पश्यमानः ॥ तासामयं योनिरयं गोष्ठ इह रयिः पुष्टिः ॥ स्वाहा ॥ इति जुहुयात् ॥ यासां बृहस्पतिरुदाजतैडा नाम रूपं पशूनां संगवं धाम पश्यमानः ॥ तासामयं योनिरयं गोष्ठ इह रयिः पुष्टिः ॥ स्वाहा ॥ इति जुहुयात् ॥ यासां मरुत उदाजन्त ज्योतिर्नाम रूपं पशूनां मध्यन्दिनं धाम पश्यमानाः ॥ तासामयं योनिरयं गोष्ठ इह रयिः पुष्टिः ॥ स्वाहा ॥ इति जुहुयात् ॥ यासां प्रजापतिरुदाजतायुर्नाम रूपं पशूनामपराह्णं धाम पश्यमानः ॥ तासामयं योनिरयं गोष्ठ इह रयिः पुष्टिः ॥ स्वाहा ॥ इति जुहुयादेतानि वा अह्नो रूपाण्येतेषु वा अह्नो रूपेषु देवाः पशूनां रूपाण्यवृञ्जत तदेतेष्वेवाह्नो[3] रूपेषु यजमानो भ्रातृव्यस्य पशून्वृङ्क्ते घृतेन जुहोति पशवो वै घृतं पशुभिरेव पशून्वृङ्क्ते तन्न सूक्ष्यं प्रातरेवान्तर्गोष्ठासु गोषु होतव्यं संवा एनाः सहावरुन्ध एतैरेव जुहुयाद्गोष्वाकृतासु योनितो वा एतत्पशूनयहीदपिहीनाः परिपरिण्यस्कृण्वन्त्येतैरेव जुहुयात्संग्रामेऽध्याश्वानभिमन्त्रयेत ॥ मित्रभृतः क्षत्रभृता ओजोभृतो बलभृतो वयं जयेम वयं सहेम वयं

1) cf. Mâitr. S. 1, 6, 11. 2) So corrigirt; Ben u. M मुखसं; H u. Bb मुखसं; desgl. B, ohne Accent. 3) So corrigirt; die Mss. तदेतेष्वेवा अह्नो

भवेम वयं पुषेम ॥ इति जयति संग्रामम् ॥ रोहिणीर्वो वृञ्जे गायत्रेण छन्दसारुणा वो वृञ्जे त्रैष्टुभेन छन्दसा गौरीर्वो वृञ्जे जागतेन छन्दसा बभ्रुवो[1] वो वृञ्जा आनुष्टुभेन छन्दसा गर्भान्वो वृञ्जे पाङ्क्तेन छन्दसा रूपाणि वो वृञ्जे शाक्वरेण छन्दसा सर्वान्वो वृञ्जे ऽनाप्तेन[2] छन्दसा तत्सप्त सप्तपदा शक्वरी शाक्वराः पशवः पशूनेवावरुन्द्धे गायत्री प्रथमा गायत्र्युत्तमा तेजो वै गायत्री ब्रह्मवर्चसं तेजसा च वावास्मा एतद्ब्रह्मवर्चसेन चोभयतः पशून्परिगृह्णाति ॥ ११ ॥

प्रजापतिर्वै त्रीन्महिम्नो ऽसृजताग्निं वायुं सूर्यं ते चत्वारः पितापुत्राः सत्त्रमासत ते स्वेदं समवैक्षंस्तदभवत्संज्ञा[3] अस्यैतन्नामाभूदिति सर्वमभूदिति तद्वा अस्यैते नामनी क्रूरे अशान्ते तस्मादेते न ग्रहीतव्ये क्रूरे ह्येते अशान्ते प्रजापतिर्वै स्वां दुहितरमभ्यकामयतोषसं सा रोहिदभवत्तामृश्यो भूत्वाध्यैत्तस्मा अपव्रतमच्छदयत्तमायतयाभिपर्यावर्तत तस्माद्वा अबिभेत्सो ऽब्रवीत्पशूनां त्वा पतिं करोम्यथ मे मा स्था इति तद्वा अस्यैतन्नाम पशुपतिरिति तमभ्यायत्याविध्यत्सो ऽरोदीत्तद्वा अस्यैतन्नाम रुद्र इति ते वा अस्यैते नामनी शिवे शान्ते तस्मादेते कामं ग्रहीतव्ये शिवे ह्येते शान्ते ततो यत्प्रथमं रेतः परापतत्तदग्निना पर्यैन्धं तदासामध्यात्वं ततो यदत्यस्रवत्तद्बृहस्पतिरुपागृह्णात्तदासामुस्रियात्वमशकामेति तदासां शक्वरीत्वं गातुमविदामेति तदासां गोत्वमेतानि वा आसां नामानि सर्वैरेवासां नामभिः सर्वैः कामैर्भुङ्क्ते य एवं वेद पशवो वै सृष्टा एतानि नक्षत्राण्यन्वपाक्रामन्पौर्णमासीमष्टकाममावास्यां त्रिधाम-

---

1) So M; die andern Mss. bloss बभ्रु 2) H u. Bb वृंजे नाप्तेन 3) So Ben u. M; in H u. Bb तदभवं संज्ञा; desgl. B, ohne Accent.

म्यत्यं तस्मात्तेषु गौर्नोपाकृत्या यामपाकुर्यात्तामस्य पशवो ऽन्वपक्रामेयुः ॥ १२ ॥

देवा वै सर्वे सहान्तर्वन्तो ऽभवꣳस्ते सर्वे सह व्यजायन्त तदेकवृदशयत्सꣳवृत्तं तद्देवा इत्थं चेत्थं च व्यत्यचरꣳस्तन्मित्रावरुणा अचायताꣳ स्याद्वै य एनद्विकुर्यादिति तन्नां द्विपदीमकुरुताꣳ सा न प्रत्यतिष्ठत्तस्या अन्यत आहत्येमौं[1] प्रत्यधत्तां तस्मादेता अवद्धा अस्यन्सां[2] चतुष्पदी भूत्वा प्रत्यतिष्ठत्प्रति प्रजया च पशुभिश्च तिष्ठति य एवꣳ वेद तस्याꣳ वै पयः पर्यपश्यꣳस्तां देवा अदुह्र हरितेन पात्रेण यज्ञं चामृतं च दुहे यज्ञं चामृतं च य एवꣳ वेदाथ पितरो ऽदुह्र रजतेन पात्रेणोर्जं च स्वधां च दुह ऊर्जं च स्वधां च य एवꣳ वेदाथ मनुष्या अदुह्र दारुपात्रेणान्नं च प्रजां च दुहे ऽन्नं च प्रजां च य एवꣳ वेदाथा[3] ऋषयो ऽदुह्र चमसेन छन्दाꣳसि च पशूꣳश्च दुहे छन्दाꣳसि च पशूꣳश्च य एवꣳ वेदाथ गन्धर्वाप्सरसो ऽदुह्र पुष्करपर्णेन पुण्यं गन्धं दुहे पुण्यं गन्धꣳ य एवꣳ वेदाथ सर्पा अदुह्रालाबुना[4] विषं दुहे भ्रातृव्याय विषꣳ य एवꣳ वेदाथासुरा अदुह्रायस्पात्रेण स्रवता भूतिं च पराभूतिं च दुहे भ्रातृव्यायाभूतिं च पराभूतिं च य एवꣳ वेद ताꣳ वा इन्द्रो ऽनयैवोपासीदत्तेदꣳ[5] सर्वमदुहद्यदिदं किंच तां दुग्ध्वा प्रत्यनुदत सा प्रतिनुत्ता कुमना अतिष्ठद्ध्यायन्ती तां प्रजापतिरचायद्[6] ध्यायति वा इति सो ऽब्रवीत्किं ध्यायसीति साब्रवीद्द्वे माधुक्षत तै

---

1) So M; in Ben चाहत्येमौं; H u. Bb चाहत्योमौं; desgl. B, ohne Accent. 2) H u. Bb चस्तंत्; B चबात्; M चर्सन् 3) Bb वेदाथ 4) So Ben u. M; H u. Bb चदुह्रालापुना; desgl. B, ohne Accent; cf. चलाबु 5) So Ben; in M °सीदत्तेदꣳ; H u. Bb °सीदत्सेदꣳ; B सीदत्सेदꣳ 6) So corrigirt; Ben °रचायत; die andern Mss. °रचाय

मा प्रत्यनुदन्तेति[1] सो ऽब्रवीन्मा सूक्षेस्तथा[2] वै त्वा करोमि यथोभयेषां देवमनुष्याणां प्रिया भविष्यसीति[3] तस्या घृतं पद्यो ऽक्षरत्तस्य घृतस्यादाय मुखं न्यमार्ट्[4] ॥ उभयेषां त्वा देवमनुष्याणां प्रियां करोमि ॥ इति तस्मादेषोभयेषां देवमनुष्याणां प्रियै तेनैव स्त्रीभियस्य मुखं विमृज्यादुभये ऽस्यैतं देवमनुष्या विदुरे तेन कुमार्या एतेन पतिकामाया एतद्वै गोवर्चसं न सर्वस्मा इव कुर्याद्यस्मै तु कुर्यात्तेजस्वी स्यात् ॥ १३ ॥

यो ललामः शितिपात् शितिककुत्[5] शितिभसत् शितिवालः[6] साशारिः[7] सामक्राष्टयूथा प्राष्टी यूथान्याप्नोति यस्य तादृङ्कृषभो भवति यस्य वालतुषः प्रतिष्ठितः सा प्रतिष्ठिता प्रति प्रजया च पशुभिश्च तिष्ठति यस्य तादृङ्कृषभो भवति यः समन्तः शितिबाहुः सा समन्ता समन्तः प्रजया च पशुभिश्च भवति[8] यस्य तादृङ्कृषभो भवति यः शितिपृष्ठः सा तन्तिः[9] पशुमान्भवति यस्य तादृङ्कृषभो भवत्यथ यस्यैकरूपस्य सतो लक्ष्म भवति सादारसृज्ञास्यामिचो[10] गा विधावति[11] यस्य तादृङ्कृषभो भवति याजलोम्नी सा पोषयिष्णुरजा इव प्रजायन्ते यस्य तादृङ्कृषभो भवति या श्यामा सा पोषयिष्णुः क्षिप्रं बह्वीर्भवन्त्यपनिषादुकास्तु यारुणा सा पोषयिष्णुः क्षिप्रं बह्वीर्भवन्ति हिमेरवस्तु[12] या श्वेता सा पोषयिष्णुः क्षिप्रं बह्वीर्भवन्ति दुश्चर्माणस्तु[13] नाभिः

---

1) So corrigirt; die Mss. प्रत्यनुदतेति 2) So M; die andern Mss. सूर्क्षस् 3) Die Mss. भविष्यसीति 4) So Ben; in M, Bb, H न्यमाड्; desgl. B, ohne Accent. 5) Ben °ककुप् 6) M, H u. Bb शितिवाल: 7) So Ben, M; desgl. B, ohne Accent; in H u. Bb सांशारि 8) Ben तिष्ठति 9) Bb तंतिः 10) So M; Ben °दारसृष्ठास्वामिचो; H u. Bb °दारसिद्धस्वामिची; desgl. B, ohne Accent. 11) So Ben; M ची°; die andern Mss. चो 12) cf. हिमेलु frostig, keine Kälte vertragend, Pâ. 5, 2, 122, Vârtt. 8. 13) So folgen die Sätze in Ben u. M; anders in H, Bb u. B, nämlich: श्यामा सा पोषयिष्णुः क्षिप्रं बह्वीर्भवंति हिमेरवस्तु या श्वेता सा पोषयिष्णुः क्षिप्रं बह्वीर्भवन्त्यपनिषादुकास्तु यारुणा सा पोषयिष्णुः क्षिप्रं बह्वीर्भवन्ति दुश्चर्माणस्तु u. s. w.

काण्वो न पृश्निरमिथुनं तद्यो व्याघ्ररूपं वै पृश्निर्बिभ्यत्यस्मात्पशवः कनीयांसो ऽस्य पशवो भवन्ति यस्य तादृगृषभो भवति तदाहुर्[1] बीजमेवोत्सृज्यमित्येतद्वा आसां बीजं यद्रोहितं[2] रूपं पशुमान्भवति यस्य तादृगृषभो भवति यो धूम्रस्ताम्रधूम्रः स प्रजापतिः प्र प्रजया च पशुभिश्च जायते यस्य तादृगृषभो भवति यस्य लोमशा ककुत्स्तब्धी स्तब्धीव[3] प्रजया च पशुभिश्च भवति यस्य तादृगृषभो भवति यस्योर्ध्वा ककुत्ता ऊर्ध्वा आप्यायन्त ऊर्ध्वा अस्य पशवा आप्यायन्ते यस्य तादृगृषभो भवति यस्य दक्षिणतः पन्नं सा पापी सा स्रवन्त्येव यस्य सव्यत उन्नतं सा पुण्या सोपाहरन्ती या उत्पृष्टिस्ता ऊर्ध्वा आप्यायन्त ऊर्ध्वा अस्य पशवा आप्यायन्ते यस्य तादृगृषभो[4] भवति यस्य सव्यतः पन्नं सा पापी सा स्रवन्त्येव यस्य दक्षिणत उन्नतं सा पुण्या सोपाहरन्ती या सव्यसाचिनी सा पुण्या सोपाहरन्ती या संभृक्षी सा गोष्ठस्तां न प्रच्छिन्द्यादनुसृष्टस्य[5] गोषु स्यातामेतौ वै पशूनामस्कन्नं हविरस्कन्नमस्य हविर्भवति यस्यानुसृष्टिर्गोषु[6] भवत्युक्षा[7] चास्य वेहच्च गोषु स्यातामेतौ वै पशूनामूर्जं विभृतो ऽक्षोधुका अस्य पशवो भवन्ति यस्योक्षा[7] च वेहच्च गोषु भवतः ॥ १४ ॥

॥ खिलकाण्डे गोनामिको द्वितीयः प्रपाठकः ॥

---

1) So M u. Bb; in H तदाहु॰; desgl. B, ohne Accent; Ben यदाहु॰ 2) Das ॰ fehlt in den Mss. 3) So meine Correctur; M, Ben स्तब्धीव:; desgl. B, ohne Accent; in H u. Bb स्तब्धीव 4) Ben तादृगुत्पृष्टिर्गोषु ऋषभो; in M sind die beiden hier eingeschalteten Worte auch am Rande von einer späteren Hand hinzugefügt. 5) So M; die andern Mss. ॰नुसृष्टस्य 6) So M; die andern Mss. यस्यानुसृष्टिर्गोषु; vielleicht übrigens auch in M das r nachträglich als delirt bezeichnet? 7) So corrigirt; die Mss. ॰क्षा

अरातीयन्ति वा अन्ये पुरुषाय नान्ये ये[1] ऽरातीयन्ति सा निर्ऋतिर्ये नारातीयन्ति सानुमतिस्तेभ्य उभयेभ्यः सह निर्वपन्त्युभौ सह शृतौ[2] कुर्वन्ति नैर्ऋतेन पूर्वेण प्रचरन्ति दक्षिणा परेत्य स्वकृत इरिण एतद्वै निर्ऋतिगृहीतं पृथिव्या निर्ऋतिगृहीत एव निर्ऋतिं निरवदयत एकोल्मुकं निधाय विस्रंसिकायाः काण्डाभ्यां जुहोति जुषाणा निर्ऋतिर्वेतु स्वाहा वासः कृष्णं भिन्नान्तं दक्षिणेत्येतद्धि निर्ऋत्या रूपमर्धं वै पुरुषस्य निर्ऋतिगृहीतमर्धमनिर्ऋतिगृहीतं यन्निर्ऋतिगृहीतं तदेवास्मात्तेन निरवदयते पुनरेत्यानुमत्या अष्टाकपालेन प्रचरन्ति निर्ऋतिमेव निरवदायेयं वा अनुमतिर्वाग्वा अनुमतमेवैनं[3] सर्वमाक्रमयत्यष्टाकपालो भवति गायत्री ह्ययं गायत्री वाग्धेनुर्दक्षिणैतद्ध्यनुमत्या रूपमथ य उदञ्चः शम्यामतिशीयन्ते तानुदङ् परेत्य वल्मीकवपामुदूह्य जुहुयादिदममुष्यामुष्यायणस्य क्षेत्रियमवयजा[4] इति तत्पुनरपिदधातीदमहममुष्यामुष्यायणस्य क्षेत्रियमपिदधामीति क्षेत्रियं[5] वा एतं गृह्णाति[6] ये चैनमन्वियं क्षेत्रस्य पत्न्यस्यामेव क्षेत्रियमवयज्याथैनं[7] सर्वमाक्रमयति श्वो भूत आदित्येभ्यो भुवद्वद्भ्यो[8] घृते चरुरित्यादित्या वा इत उत्तमाः स्वर्गं लोकमायंस्तेभ्य एव प्रोच्य स्वर्गं लोकमेत्यादित्या वा अस्मिंल्लोक ऋद्धा आदित्या अमुष्मिन्नुभयोरेव लोकयोर्ऋध्नोति वरो दक्षिणा वरेणैव स्वर्गं लोकमभ्यारोहति श्वो भूत आमावैष्णव एकादशकपाला इत्ययमिवै सर्वो

---

1) So corrigirt; in den Mss. ohne Accent; Bb ये 1) So M, H, Bb; in Ben सहःशृतौ; B सह भृतौ 3) So die Stelle in Ben u. M; in H u. Bb प्रचरंति निर्ऋतिमेतिर्पोव्वा अनुमतिरवदायेयं वा अनुमतमेवैनं; desgl. B, ohne Accent. 4) Ben येषीय॰ 5) Ben येषीयं 6) Bh प्रतिगृह्णाति 7) Ben येषियम॰ 8) Mit भु bricht Ben am Schluss von p. 37 plötzlich ab und geht am Anfang von p. 38 auf IV, 13, 1 a. E. über. Die nächstfolgenden Partieen fehlen in Ben völlig.

देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चालभ्यामिवै यज्ञस्यान्तो ऽवस्ताद्विष्णुः परस्तादुभयत एव यज्ञस्यान्ता उदयहीदुभयत एव यज्ञस्यान्ता उद्गृह्य यथोत्सङ्ग आवपेतैवं वा एतद्यज्ञमावपते तस्य यथाकामं निर्वपमाण एत्यनड्वान्वामनो दक्षिणा यद्वही तेनाग्नेयो यद्वामनस्तेन वैष्णवो रूपेणैवैनं समर्धयति श्वो भूते ऽग्नीषोमीया एकादशकपाला इत्यग्नीषोमाभ्यां वै वी३र्येणेन्द्रो वृत्रमहन्वृत्रं खलु वा एष हन्ति यो राजसूयेनाभिषिञ्चते तद्वार्त्रघ्नमेवैतद्धिरण्यं दक्षिणा सत्यं वै हिरण्यं सत्येनैव हन्ति श्वो भूत ऐन्द्राग्न एकादशकपाला इत्यग्नीषोमाभ्यां वै वी३र्येणेन्द्रो वृत्रमहन्स ओजसा वीर्येण व्यार्ध्यत स एतमैन्द्राग्नमपश्यत्तेनौजो वीर्यमात्मन्नधत्तौजसा वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिञ्चता ओजो वीर्यमिन्द्राग्नी ओजसैवैनं वीर्येण समर्धयतो ऽनड्वानृषभो दक्षिणा यद्वही तेनाग्नेयो यन्मुष्करस्तेनैन्द्रो रूपेणैवैनं समर्धयति श्वो भूत आग्ने३यो ऽष्टाकपालो माहेन्द्रं दधीत्यृद्ध्या एवाग्नेयं इन्द्रो वै वृत्रमह३न्त्सो ऽन्यान्देवानत्यमन्यत स महेन्द्रो ऽभवत्स एतमुद्धारमुदहरद्वृत्रं हत्वा तदुद्धार एवास्यैष भाग एवं तस्माद्राजा संग्रामं जित्वोदाजमुदजयत्पयसा वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिञ्चते यत्पयः पयसैवैनं समर्धयतीन्द्रियेण वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिञ्चते यदैन्द्रमिन्द्रियेणैवैनं वीर्येण समर्धयति देवताभिर्वा एष व्यृध्यते यो राजसूयेनाभिषिञ्चते सर्वदेव३त्यं वै वासो यद्वासः क्षौमं दक्षिणा देवताभिरेवैनं समर्धयति ॥ १ ॥

Vgl. oben 2, 6, 1. — TBr 1, 6, 1, 1—9.

---

1) So meine Correctur; die Mss. निर्वपमाणयेत्यनड्वा° 2) M यदैन्द्रं इन्द्रि°

देवा ओषधीषु पक्वास्वाजिमयुः[1] स इन्द्रो ऽवेदग्निर्वा इमाः प्रथम उज्जेष्यतीति सो ऽब्रवीद्यतरो नौ पूर्व उज्जयेत्तन्नौ सहेति ता अग्निरुदजयत्तदिन्द्रो ऽनूदजयत्तस्मादैन्द्राग्नमथो आहुराग्नेन्द्रं का३र्यमित्यग्निर्हि ता अग्र उदजयत्तदुज्जित्या एवाग्रायणो द्वादशकपालो भवति द्वादश मासाः संवत्सरः संवत्सराद्धि तदध्यभवत्सप्तदश सामिधेनीः का३र्याः पञ्च ऋतवो द्वादश मासा एष संवत्सरः संवत्सराद्धि तदधि भवत्येका वै तर्हि यवस्य मुष्टिरासीदेका व्रीहेरेका माषस्यैका तिलस्य तद्विश्वे देवा अब्रुवन्वयं व एतत्प्रथयिष्यामो भागो नो ऽस्त्विति तद्विश्वे देवा अप्रथयंस्तद्भूम्न एव वैश्वदेवो ऽथो प्रथयत्येवैतेन पयसि स्याद्वैश्वदेवो वैश्वदेवं हि पयो ऽथ वा इयमब्रवीन्मयि वा एतदध्यसौ वृष्ट्या[2] पचति नैतदितो ऽध्युज्जेष्यथ भागो ना अस्त्विति तदाभ्यां वावैष भागः क्रियता उज्जित्या अथो प्रतिष्ठित्या एव यद्द्यावापृथिवीयः सौमीर्वा ओषधयः सोमा ओषधीनामधिराजस्तस्य वा एष भागो यदकृष्टपच्यं तदुद्धार एवास्यैष भाग एव तस्माद्राजा संग्रामं जित्वोदाजमुदजते[3] ग्राम्या वा अन्या ओषधय आरण्या अन्यास्ता एवास्यैतेनोभयीरवेष्टा भवन्ति याः फालकृष्टास्तासामेतेनाग्रायणं करोति या आरण्यास्तासामुत्तरेणानीतो वा एष देवानां य आहिताग्निर्यदकृत्वाग्रायणं नवस्याश्नीयाद्देवानां भागं प्रतिक्लृप्तमश्नीयादार्तिमार्छेत्सर्वेभ्यो वा एषो ऽन्येभ्यो ऽभिषिच्यते यो राजसूय आग्राय-३णो ऽन्नाद्यस्यावरुद्ध्यै वत्सः प्रथमजो दक्षिणा रेत इव ३ह्येषो ऽप्रजातः[4] प्रजात्यै ॥ २ ॥ Vgl. 2, 6, 2. — TBr 1, 6, 1, 10 flg.

1) M °स्वाजीम°; Tâitt. Br. 1, 6, 10 ओषधीष्वाजिमयुः 2) So M; in H u. Bb वृष्टया; B वृष्टा· 3) Hierüber vgl. Einl. zum 1. Kâṇḍa p. XV; Mâitr. S. 1, 10, 16. 4) Bb प्रजातः

अथैतानि चातुर्मास्यानि संवत्सरं वै चातुर्मास्यानि परीज्यन्ते संवत्सरादेवैनान्यध्याप्यावरुन्द्ध उत्सन्नयज्ञो वा एष संवत्सराद्वा अभ्युत्सन्नयज्ञो ऽवरुध्यते संवत्सरादेवैनमध्याप्यावरुन्द्धे पशवो वा एते चातुर्मास्येभ्यो ऽध्यतिरिच्यन्ते यच्छुनासी३र्यं तानेवाप्नोति[1] वप्रे उदके यजेतैतद्धि पशूनां नैदिष्ठमथैतानि पञ्च हवींषि संतत्यै ग्रामकामो यजेत वायुर्वा इमाः प्रजा नस्योता इत्थं चेत्थं च नेनीयते यद्वायवे वायुरेवास्मै नस्योतां विशं निनयत्यन्नकामो यजेत संवत्सरो वा इन्द्रः शुनासीरः संवत्स३रो ऽन्नाद्यस्य प्रदाता तमेव भागधेयेनोपासरत्सो ऽस्मा अन्नाद्यं प्रयच्छति वप्रे उदके यजेतैत३द्ध्यन्नाद्यस्य नैदिष्ठं वृष्टिकामो यजेत वायुर्वा इमे समीरयति स आप्याययति ततो वर्षति संवत्सरो वा इन्द्रः शुनासीरः संवत्सरमनुवर्षति ॥ ३ ॥

Vgl. TBr. 1, 7, 1, 1.

देवाश्च वा असुराश्चास्पर्धन्त स वृत्र इन्द्रमब्रवीत्त्वं[2] देवानां श्रेष्ठो ऽस्यहमसुराणां सं शक्नवाव मा ना३न्यो ऽन्यं ऽवधीदिति तौ वै समामेतामनभिद्रोहाय[3] ते देवा वृत्रममन्यन्तायं वावेदं भविष्यतीति त इन्द्र ऐच्छन्हनामेममिति सो ऽब्रवीत्संधा वै मे संहितानभिद्रोहायेति[4] तमग्निरब्रवीदहमेव त्वतः पास्यामीति पृथिव्या अहमन्तरिक्षादिति वरुणो ऽहं दिव इति रुद्रस्ततो वै देवा वृत्रमघ्नन्वृत्रं खलु वा एष हन्ति यो राजसूयेनाभिषिच्यते तद्वार्त्रघ्नमेवैतद्देवाश्च वा असुराश्च समयतन्त तानग्निस्त्रेधात्मानं कृत्वा प्रत्ययततो ऽग्निरेवास्मिंल्लोके

1) So M; in H u. Bb तान्वेवा°; desgl. B, ohne Accent. 2) So M; in H u. Bb इंद्रा अब्रवी°; B इंद्रः अब्रवी° 3) So M; H u. Bb betonen संमामेताम° 4) Von hier bis पृथिव्या (excl.) in B eine Lücke. 5) H u. Bb °यजता°

भूत्वा वरुणो ऽन्तरिक्षे रुद्रो दिवि स इन्द्रो ऽमन्यतायं वावेदं भविष्यतीति सो ऽब्रवीदहं विश्वाभ्या आशाभ्या इति ततो वा अजयंस्तज्जित्या एवैतदे तेनैव याजयेत्संग्रामे जयति संग्राममेतेनैव याजयेद्भ्रातृव्यवन्तं यो वास्य प्रियः स्यात्तं भवत्यात्मना परास्य भ्रातृव्यो भवति यद्वै तदिन्द्रस्तुरीय उपसमपद्यत तस्मादिन्द्रतुरीयं धेनुरनड्वाही दक्षिणा यद्वहिनी तेनाग्नेयी यद्धेनुः सती दान्ता तेन वारुणी यद्गौस्तेन रौद्री यत्पयस्तेनैन्द्री रूपैरेवैनां समर्धयतीन्द्रो वै नमुचिं नालभत स रश्मीन्कुलायं[1] कृत्वान्वारोहदमुमादित्यं तं वा अन्वमन्त्रयत सखाया असावेति[2] सो ऽब्रवीन्नाहं हनिष्यामीति[3] सो ऽब्रवीत्संधां ते संदधे यथा त्वा न दिवा हनानि न नक्तं न शुष्केण नार्द्रेणेति तस्य वा उपोदये सूर्यस्य नीहारं[4] संतत्यापां फेनेन शिरो ऽछिनत्तद्वा एनमन्ववर्तत मित्रद्रुगसीति पाप्मा वै नमुचेः शिरः पाप्मा वा एनं तदन्ववर्तत पाप्मानं वै स तेनापाहत तत्पाप्मानमेवैतेनापहते ऽपां न्ययनादपामार्गानाहरन्त्यापो वै रक्षोघ्नीरपो रक्षांसि न तरन्ति रक्षसामपहत्यै वरो दक्षिणा वरेणैव वरं स्पृणोत्यात्मा हि वर आत्मानं हि तस्य तदन्ववर्तत ये देवाः पुरःसदो अग्निनेत्रा रक्षोहणस्ते नो ऽवन्तु ते नः पान्तु तेभ्यः स्वाहेत्येतह्व३त्या वा इमा दिशो यथादेवतं वा एताभ्यो दिग्भ्यो ऽधि रक्षांस्यपहन्त्यनुपरिक्रामं जुहोति सर्वाभ्य एव दिग्भ्यो ऽधि रक्षांस्यपहन्तीदमहं रक्षोभिः समूहाम्ययमे संदह रक्षः संदग्धं रक्षा इत्याह रक्षसां ध्वरायै रक्षसामन्तरित्या अथ यत्पुनः स-

---

1) So M; ohne Accent (n. Bl.); in H u. Bb रश्मिमन्; desgl. B, ohne Accent: 2) So M, nur ohne Accent; in H u. Bb सखावेति:; desgl. B, ohne Accent. 3) So B, ohne Accent; in H u. Bb हनिष्यामीति; M हनिष्यसि मेति 4) Die Mss. schwanken; M u. B निहारं; H u. Bb नीहारे

मूख[1] जुहोति याभ्य एव दिग्भ्यो ऽधि रक्षांस्यपावधीत्ता भागिनीः करोत्यहिंसायै रथः पञ्चवाही दक्षिणा पञ्च दिशः पञ्च देवताः समृद्ध्यै ॥ ४ ॥

Vgl. 2, 6, 3. -- TBr 1, 7, 1, 2 flg.

सौमेनेजानं याजयेत्संवत्सरं वा एतस्य छन्दांसि यातयामानि भवन्ति यः सौमेन यजते[2] छन्दांसि वै दैविकाश्छन्दांसि वावास्मा एतदयातयामानि पुनर्यामाणि करोति राजसूयेनाभिषिषिचानं याजयेत्पष्ठौही दक्षिणाशां वा एष उपाभिषिच्यत आशा पष्ठौ३ह्याशामेवास्मा अकः पशुकामं याजयेच्छन्दांसि वै दैविकाः पशवश्छन्दांसि गायत्र्यनुमतिस्त्रिष्टुब्राका जगती सिनीवाली कुहूरनुष्टुब्धाता वषट्कारो या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका या पूर्वामावा३स्या सा सिनीवाली योत्तरा सा कुहूश्चन्द्रमा एव धाता यद्वै संवरे द्वे परे तन्मिथुनं यत्पूर्यते ऽन्यां नान्यां तन्मिथुनं यत्पश्यन्त्यन्यां नान्यां तन्मिथुनं यदमावास्याया अधि चन्द्रमाः प्रजायते तन्मिथुनं तस्मादेवास्मै मिथुनात्पशून्प्रजनयति प्रजाकामं याजयेद्धातारमुत्तमं कुर्यात्स्त्रियो वै दैविकाः पुमान्धाता पराचीर्वै प्रजा रेतो दधते पराचीष्वेवासु रेतो दधाति तदाहुर्न[4] वै तेन पराधत्ते यदन्तरा प्रवीयेता इति व्यै[3]वदध्याद्धातारं मध्यतः सर्वा एवैना वृषमोदिनीः करोति तदाहुर्जायत[5] एव पश्चाश्वर इव तु भवति स्त्रीभ्यो ह्येनं पश्चात्परिणयन्तीति स यदा जायेताथ धात्रे पुरस्तान्निर्वपेदयं वै धातायमेवैनं परिणयति ॥ ५ ॥

Vgl. 2, 6, 4 — TBr. 1, 7, 2.

---

1) So corrigirt; die Mss. समुख 2) B यजेत 3) So corrigirt: die Mss. स्त्रीयो
4) Bb तस्मादाहु° 5) H u. Bb यदाहु°

आमयाविनं याजयेद्धातारं मध्यतः कुर्यात्संवत्सरो वै धाता संवत्सरो हि वा एतस्य मुग्धो ऽथैतस्यामयति संवत्सरं वावास्मा एतन्मध्यतो ऽचीक्लृपदथैनमेतस्मान्मिथुनात्प्रजनयतीश्वराणि वा एतमेतानि छन्दांस्यृते पशोरशान्तानि निर्मृजः[1] पशुरप्यालभ्यः शान्त्या अनिर्मार्गाय ते वै पशवो यद्व्रीहयश्च यवाश्च यद्व्रीहिमयः पुरोडाशो भवति तेनैव पशुरालभ्यते शान्त्या अनिर्मार्गाय वीरस्था वा अन्ये पशवो ऽवीरस्था अन्ये ये पुरस्तात्पुरोडाशास्ते वीरस्था ये पश्चात्पुरोडाशास्ते ऽवीरस्था ये पुरस्तात्पुरोडाशा भुञ्जतस्त उपतिष्ठन्ते प्रजापतिं ह्येते प्रतिष्ठामभ्यसृज्यन्त ये पश्चात्पुरोडाशाः परा ते भवन्ति यासु स्थालीषु सोमाः स्युस्ते चरवः स्युः सोमो वै रेतोधाः प्रजननाय सर्ववेदसेनेजानं याजयेत्पशुभिर्वा एष व्यृध्यते यः सर्वं ददात्यथ वा एष जघन्यं पशून्पश्यति यच्चैनान्विभजति यच्चैवैनान्विभजति तत एनान्पुनरवरुन्द्धे य एव कश्च सोमेन यजेत तं याजयेत्संवत्सरं वा एतस्य छन्दांसि यातयामानि भवन्ति यः सोमेन यजते छन्दांसि वै देविकाश्छन्दांसि वावास्मा एतदयातयामानि[2] पुनर्यामाणि करोति ॥ ६ ॥

अथैतत्त्रिषंयुक्तं यत्पूर्वं त्रिषंयुक्तमित एवास्मै तेनोर्ध्वानिमांल्लोकान्दाधार यदुत्तरं त्रिषंयुक्तममुत एवास्मै तेनार्वाच इमांल्लोकान्दाधार तदेषां वावैते लोकानां विधृत्यै यत्पूर्वं त्रिषंयुक्तं वीरजननं तद्यदुत्तरं पशुजननं तद्यत्पूर्वं त्रिषंयुक्तं वीरानेवास्मै तेन ज-

---

1) So in M durch Correctur am Rande, eigentlich °शान्ता निर्मृजः; so auch in den andern Mss. 2) B schaltet hier die Worte ein: भवन्ति यः सोमेन यजते छन्दांसि

नयति यदुत्तरं पशूंस्तेन यत्पूर्वं त्रिषंयुक्तं रेत एव तेन दधाति यदुत्तरं प्र तेन जनयति यत्पूर्वं त्रिषंयुक्तं तेन यज्ञकामो यजेताग्निर्वै सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चालब्धेन्द्रो वै यज्ञो विष्णुर्यज्ञस्तद्यज्ञस्यैवैष आरम्भो ऽथ यद्वैष्णवो विष्णुर्वै यज्ञो यज्ञ एव प्रतितिष्ठति यदुत्तरं त्रिषंयुक्तं तेन पशुकामो यजेत सौम्यो वै रेतोधाः पूषा पशूनां प्रजनयिता सोम एवास्मै रेतो दधाति पूषा पशून्प्रजनयतीन्द्रियेण वै पशवः प्रजायन्ते पूषा प्रजनयतीन्द्रियेणैवास्मै पूषा पशून्प्रजनयत्यथ यत्पौष्णः पशवो वै पूषा पशुष्वेव प्रतितिष्ठत्यथैतद्वैश्वानरवारुणं[1] संवत्सरो वा अग्निर्वैश्वानरस्तस्य वा एते स्वा यदृतवस्तेषां वा ए३षो ऽभिषिक्तो राजाभिषिक्तो वै देवानां वरुण एतौ वै देवानां सूता एतौ सर्वपती[2] एतौ सर्वस्येशाते ता एनं सुवाते यावन्तो वा एतस्य स्वा अनुका[3] वै त एतमनुका देवा वरुणं यावन्त एवास्य स्वास्तानस्मा अनुकानविवादिनः करोतीयांश्चस्वं भवत्येतावान्वा आत्मा यावानेवास्यात्मा तं वरुणान्मुञ्चति संवत्सरो वा अग्निर्वैश्वानरः संवत्सर एवैनं प्रतिष्ठापयति संवत्सरायुषमेनं करोति तस्माद्राजसूयाभिषिक्तस्य जरसा दन्ता अवशीयन्ते संवत्सरे ह्येनं प्रतिष्ठापयति संवत्सरायुषमेनं करोति यो ज्योगामयावी स्यात्तमेतेन याजयेद्वरुणेन हि वा एष पाप्मना गृहीतो ऽथैतस्य ज्योगामयति यद्वारुणो वरुणादेवैनं तेन मुञ्चतीयांश्चस्वं भवत्येतावान्वा आत्मा यावानेवास्यात्मा तं वरुणान्मुञ्चति

1) H u. Bb ॰रुणः 2) So M; desgl. B, ohne Accent; H सर्वपती; Bb सर्वपती
3) Dies Wort in den Mss. ohne Accent.

सꣳवत्सरो वा अग्निर्वैश्वानरः सꣳवत्सर एवैनं प्रतिष्ठापयति सꣳवत्सरायुषमेनं करोति ॥ ७ ॥

अथैते रत्निनः क्षत्रस्य वा एतान्यङ्गानि यस्य वा एतान्योजस्वीनि भवन्ति तद्राष्ट्रमोजस्वी[1] भवति तान्येवास्यौजस्वीनि करोति क्षत्रस्य वा एतान्यङ्गानि यस्य वा एतानि तेजस्वीनि भवन्ति तद्राष्ट्रं तेजस्वी[2] भवति तान्येवास्य ब्रह्मणा तेजस्वीनि करोति बार्हस्पत्यश्चरुर्ब्रह्मणो गृह इति ब्रह्म वै बृहस्पतिर्बृहस्पतिपुरोहितं खलु वै राष्ट्रमृध्नोति ब्रह्म वा एतत्पुरस्ताद्राष्ट्रस्यात्यौहीदयो ब्रह्मण एव राष्ट्रमनुकं करोत्यैन्द्र एकादशकपालो राज्ञो गृह इतीन्द्रियꣳ वा इन्द्र इन्द्रिय एव प्रतितिष्ठत्यादित्यश्चरुर्महिष्या गृह इतीयꣳ वा अदितिरस्या एवैनं मात्रां गमयतीमामेवैनं[3] प्रजाभ्य उपजीवनीयं करोति धेनुर्दक्षिणैतद्ध्यदित्या रूपं नैर्ऋतश्चरुर्नखावपूतानां परिवृक्त्या गृह इति निर्ऋतिगृहीता हि वा एषाथैतां परिवृञ्जन्ति[4] निर्ऋतिमेव निरवदायेयꣳ वा अनुमतिरस्या एवैनं मात्रां गमयतीमामेवैनं[5] प्रजाभ्य उपजीवनीयं करोति श्येनी वराडापस्फुरा दक्षिणैतद्धि निर्ऋत्या रूपमाग्नेयो ऽष्टाकपालः सेनान्यो गृह इत्यग्निर्वै सर्वा देवता देवताभिरेवास्य सेनामुखं जित्यै सꣳश्यति हिरण्यं दक्षिणा सत्यꣳ वै हिरण्यꣳ सत्येनैव जयत्याश्विनो द्विकपालः संग्रहीतुर्गृह इति रथरेषमेवास्मात्तेन निरवदयते सवत्यौ दक्षिणेति सवत्या इव हि सव्यस्थसारथी[6] रथमभि

1) So die Mss.; wohl °स्विनि zu schreiben. 2) So die Mss.; cf. oben ओजस्वी 3) M u. B °मामिवैनं; cf. unten. 4) So M u. B; in H °वृञ्जति; Bb °वृंजति 5) So corrigirt; die Mss. °मिवैनं 6) So corrigirt; M u. B सव्यष्ठसारथी; H सव्यष्ठसारथी oder सव्यस्थसारथी; Bb सव्यस्थसारथी

सावित्रो ऽष्टाकपालः क्षत्तुर्गृहे प्रसूत्या अथो सवितैव ह्यस्यैष प्रजाभ्यः प्रसुवति वारुणो यवमयो दशकपालः सूतस्य गृहे मारुतः सप्तकपालो वैश्यस्य ग्रामण्यो गृह इति सूतमुखा वै विट् क्षत्रमुपतिष्ठते सूतमुखां वावास्मा एतद्विशं मुखतो ऽन्नाद्यायोपदधाति पौष्णश्चरुर्भागदुघस्य गृह इति पुष्टिर्वै पूषा पुष्टिमेवास्य भागे दधाति वैष्णवस्त्रिकपालस्तक्षरथकारयोर्गृह[1] इति विष्णुर्वै यज्ञो यज्ञ एव प्रतितिष्ठति रौद्रो गावीधुकश्चरुरक्षावापस्य गृहे गोविकर्तस्य चैत्यन्तात एवास्मात्तेन रुद्रं निरवदयते ऽथो रुद्र इव ह्येतौ पशू अभिमन्येते[2] एकादश वा एतानि हवींष्येकादशाक्षरा त्रिष्टुब्वीर्यं त्रिष्टुब्वीर्य एव प्रतितिष्ठति नाना वा एत एतेषामाशिषो ऽवरुन्धते यत्सह निर्वपेयुररत्निनः स्युरैन्द्र एकादशकपालो राज्ञो गृह इतीन्द्रियं वा इन्द्र एकधा वा एतद्यजमाने यज्ञस्याशीः प्रतितिष्ठत्यैन्द्रो हि यजमानः॥८॥

Vgl. 2, 6, 5. — TBr. 1, 7, 3, 1—7.

इन्द्रायांहोमुचा एकादशकपालं निर्वपेद्यदेव किंचार्वाचीनं जनितोरेनः करोति तत एनमंहोमुङ् मुञ्चतीन्द्राय सुत्राम्ण एकादशकपालं य एवोपवादी यो ऽभिदासति तत एनं सुत्रामा त्रायते ऽथैतन्मैत्राबार्हस्पत्यं सत्यं वै मित्रो ब्रह्म बृहस्पतिः सत्यं चैव ब्रह्म चालभ्य दीक्षते क्षत्रं वै मित्रो ब्रह्म बृहस्पतिः क्षत्रं चैव ब्रह्म चालभ्य दीक्षते यस्य राष्ट्रं शिथिरमिव स्यात्तमेतेन याजयेन्मैत्राबार्हस्पत्येन क्षत्रं वै मित्रो ब्रह्म बृहस्पतिर्ब्रह्मणि वा एतत्क्षत्रं प्रतिष्ठापयति दृढिम्ने ऽशिथिरत्वायाथैते देवसुव एते वै देवानां सूता एते

1) So corrigirt; die Mss. (d. h. H u. Bb) तक्षरथकारयो°; M n. Bl. ohne Accent; cf. aber auch oben 2, 6, 5. 2) M पशूनभि° (n. Bl.).

सर्वपतय एतै सर्वस्येशते त एनꣳ सुवते तस्माद्वा एतमाहुः पूर्वेद्युर्वा एष सूयते ऽभितष्व[1] सिच्यता इत्यथैष मारुत एकविꣳशतिकपालस्त्रिर्वै सप्त सप्त मरुतो विशमरुतो विशो वा एतन्मध्यतः सूयते तस्माद्वा एष विशः प्रियो विशो हि मध्यतः सूयते वरुणस्य वा अभिषिच्यमानस्येन्द्रियꣳ वी३र्यमपाक्रामत्तत्त्रेधाभवद्भृगुस्तृतीयमभवच्छ्रायन्तीयं तृतीयꣳ सरस्वती[2] तृतीयं प्राविशद्यद्भार्गवो होता भवति श्रायन्तीयं ब्रह्मसामꣳ सारस्वतीरापस्तदेवैन्द्रियꣳ वी३र्यं तेज आप्नोति वाचा वा एतमभिषिञ्चन्ति यमभिषिञ्चन्ति वाक्सरस्वती सारस्वतीरापो यत्सारस्वतीभिः सूयते यावत्येव वाक्तया सूयते ॥ ९ ॥

Vgl. 2, 6, 6. — TBr. 1, 7, 3, 7 flg.

अपांꣳ वा एतानि चित्राण्यपांꣳ वा एतच्चित्राणि संभरन्त्यपामेनं चित्रैरभिषिञ्चन्ति[3] चित्रमस्मिन्दधति[4] तस्माद्वा ए३षो ऽभिषिक्तश्चित्रꣳ राजेति श्रूयते ऽपांꣳ ह्येनं चित्रैरभिषिञ्चन्ति चित्रमस्मिन्दधति[5] यथा वा इदं मधुकृतो[6] मधु संभरन्त्येवꣳ वा एतदपामोषधीनाꣳ रसꣳ संभरन्त्यपामेनमोषधीनाꣳ रसेनाभिषिञ्चन्ति रसमस्मिन्दधति[7] तस्माद्वा एतमाहुरसी[8] राजा पुण्या इत्यपांꣳ ह्येनमोषधीनाꣳ रसेनाभिषिञ्चन्ति रसमस्मिन्दधति[9] वरुणसवो वा एष वारुणीरापो यदद्भिरभिषिञ्चति वरुणमेवैनमकर्विषुवान्वै सरस्वती सारस्वतीरापो यत्सारस्वतीभिः सूयते

---

1) So corrigirt; M भितुष्व; H u. Bb भितुष्व; desgl. B, ohne Accent. 2) So die Mss. 3) H u. Bb ॰चति 4) In M das दधति, wie es scheint, nachträglich zu दधाति corrigirt; Bb दधाति 5) Bb दधाति 6) Bb मधुकृतो 7) So M; die andern Mss. दधाति 8) So M; in H u. Bb ॰रासीद्; desgl. B, ohne Accent. 9) So M; die andern Mss. दधाति

विषुवान्भवति षोडश ग्रहा गृह्यन्ते षोडश होमा हूयन्ते तद्द्वात्रिꣳशद्द्वात्रिꣳशदक्षरानुष्टुब्वागनुष्टुब्यावत्येव वाक्तया सूयते ॥ १० ॥

Vgl. TBr. 1, 7, 5, 5.

॥ इति[1] खिलकाण्डे[2] तृतीयः प्रपाठकः ॥[3]

---

प्रतीपमन्यं ऊर्मिर्युध्यत्यन्वीपमन्यो मिथुनत्वाय यत्तस्य गृह्णाति यः प्रतीपꣳ युध्यत्योजसा वा एष वीर्येण प्रतीपꣳ युध्यत्योजसा वा एतद्वीर्येण राष्ट्र ओजो वीर्यं दधात्यथ यत्तस्य गृह्णाति यो ऽन्वीपमीरयति माहिषं तेन तोकं प्रजनयत्यथ यन्नदीपतेरपाꣳ वा एतन्मिथुनमपाꣳ वा एतन्मिथुनेन राष्ट्रे मिथुनं दधात्यथ यत्प्रहावरीणां मध्यमेष्ठेयं तेनावरुन्द्धे ऽथ यत्परिवाहिणीनां पारिवस्यन्त्यास्तेन[4] तोकं प्रजनयत्यथ या आपो ऽञ्शेरा ओजसा वा एता वी३र्येणापो ऽञ्शेरा ओजसा वा एतद्वीर्येण राष्ट्र ओजो वीर्यं दधात्यथ यत्कूप्यानामुभयीस्तेनापो ऽवरुन्द्धे याश्च समुद्रिया याश्चासमुद्रिया ईश्वरा वा एतमेता स्रोत३स्या आपो ऽशान्ता निर्मृजो यत्स्थावराणां गृह्णाति शान्त्या अनिर्मार्गाय या आतपति वर्षेति याश्च परिदहश्चे[5] ता आपो ब्रह्मवर्च३स्यास्ताभी[6] राष्ट्रे ब्रह्मवर्चसं दधात्यथ यद्ध्रादुनीनाꣳ[7]

---

1) Das इति fehlt in den Mss. 2) B fügt hier ein चरातीयम्; H u. Bb चरातीयं 3) In M lautet die Unterschrift irrig द्वितीयः प्रपाठकः. समाप्तः 4) So M; in B पारिवसन्त्यास्; H u. Bb पारवसन्त्यास् 5) So M; die andern Mss. °दहृचे 6) So corrigirt; die Mss. ताभि 7) M यद्ध्रादुनीनाꣳ; H u. Bb यत् ह्रादुनीनाꣳ; desgl. B, ohne Accent.

विशस्तेन वी३र्यमवरुन्द्धेऽथ यत्पुष्पाणामारण्यं तेनाथ यदुल्व्यानां वज्रो वै पशवो वज्रा उल्व्या वज्रेण वा एतद्राष्ट्रं वज्रं दधात्यथ यत्पयसः पयसा वा एतद्राष्ट्रं पयो दधात्यथ यद्भृतस्यैता वा आपोऽनाधृष्यास्ताभी[1] राष्ट्रमनाधृष्यं करोत्यथ यन्मधोरपां वा एष ओषधीनां रसोऽपां वा एतदोषधीनां रसेन राष्ट्रं रसं दधाति षोडश वा एते ग्रहाः प्राजापत्याः समानीतः सप्तदशः प्रजापतिः सप्तदशः प्रजापतिमेवाप्नोति ॥ १ ॥

Vgl. 2, 6, 7. — TBr. 1, 7, 5.

देवीरापो मधुमतीः संसृज्यध्वं महि क्षत्रं क्षत्रियाय वन्वाना इत्येता हि क्षत्रस्य वन्वीरनाधृष्टाः सीदतोर्जस्वतीर्महि वर्चः क्षत्रियाय दधतीरित्येता हि क्षत्रस्य धात्रीरनिभृष्टमसीत्यनिभृष्टं[2] ३ह्येव राष्ट्रमकस्तपोजा इति तपोजा हि राष्ट्रं सोमस्य दात्रमिति सोमस्य ३ह्येतद्धात्रं शुक्रा वः शुक्रेण पुनामि चन्द्रा वश्चन्द्रेण पुनामीत्यायुर्वै हिरण्यमायुष्या एवैना अकर्वर्चो वै हिरण्यं वर्चस्या एवैना अकर्देवो वः सविता पुनात्वच्छिद्रेण पवित्रेणेत्येतद्वा अच्छिद्रं पवित्रं यत्सूर्यस्य रश्मयोऽच्छिद्रेणैवैनाः[3] पवित्रेण पुनाति स्वाहा राजसूया इति राजसूया ३ह्येताः सधमादो द्यु३म्न्या[4] ऊर्जा एका इति व्यानयति वारुण्या वारुणीर्ह्यापः स्वयैव देवतया रुद्र यत्ते गिरिपरं नामेति रुद्रमेवास्मात्तेन निरवदयते तस्मिन्हुतमसि यमेष्टमसि स्वाहेसि मृत्युर्वै यमो मृत्युमेवास्मात्तेन निरवदयते सौमा इन्द्रो वरुणो मित्रो अ-

1) So corrigirt; die Mss. ताभि 2) So meine Corrctur; die Mss. °सीत्वनि
3) H u. Bb °वैना° 4) In M entweder so, oder द्यु३म्न्या; Bb द्युम्ना; H द्यूम्ना; B द्यू३म्न्या; cf. 2, 6, 8. In TBr. 1, 7, 6, 4 सधमादो द्युम्निनीरूर्ज एता इति

मित्रो देवा धर्मधृतो धर्मं धारयन्त्वित्येते वै देवा धर्मधृतो यदिमे प्राणा' यदेनमेतेभ्यो ऽप्रोक्ष्याभिषिञ्चेयुरपरोधुका एनं स्युरथ यदेनमेतेभ्यः प्रोक्ष्याभिषिञ्चन्ति तथा हैनमनपरोधुका भवन्ति' पर्णस्य वा अग्ने ऽन्ते ब्रह्म समवदन्त' तद्धाव सुश्रवा यत्तदशृणोत्पर्णमयेनाभिषिञ्चति' ब्रह्माभिषिञ्चति' ब्रह्मवर्चसेनैवैनमभिषिञ्चत्यथो ब्रह्म वै ब्रह्मा' ब्रह्मणैवैनं ब्रह्माभिषिञ्चत्याश्वत्थेन वैश्यो' विशो वी३र्यमपाक्रामत्सदश्वत्थं प्राविशत्स तेन वीर्येण भर्भराभवत्तद्विश एवैतेन वी३र्यमवरुन्द्ध' औदुम्बरेण भ्रातृव्या' ऊर्ग्वा उदुम्बर' ऊर्जं वा एतद्ब्राह्मं यजमानो भ्रातृव्यस्य वृङ्क्ते' यो जन्यो मित्रं स नैयग्रोधेन' मित्रेण वै क्षत्रं व्यवततमवरोधैर्न्यग्रोधो' मित्रेण वा एतत्क्षत्रं व्यवतनोति दृढिम्ने ऽशिथिरत्वाय ॥ २ ॥

Vgl. 2, 6, 8. — TBr. 1, 7, 6, 1—4.

क्षत्रस्य योनिरसि' क्षत्रस्योल्बमसि' क्षत्रस्य नाभिरसीतीन्द्रो वै यदजायत तस्य वा एष योनिरासीद्यत्तार्प्यमुल्वं[2] पाण्डरं[3] नाभिरुष्णीषः' सूतवशाया अध्यजायत' सूना चतुःपद्यूधरासीन्नैवाराः पीयूषस्तस्मान्नैवारः पुरोडाशः' पञ्चाशतमन्यस्मिन्नक्षण्यानक्त्यैकपञ्चाशतमन्यस्मिं-[4]ञ्छतायुर्वै पुरुषः शतवीर्य' आयुरेव वीर्यमाप्नोत्यप उपस्पृशत्यमृतं[5] वा आपो ऽमृतेनैवैनं सं रम्भयत्याविन्नो अग्निर्गृहपतिरिति' गार्हपत्यायैवैनमावेदयत्याविन्न इन्द्रो वृद्धश्रवा इतीन्द्रियं वा इन्द्र' इन्द्रियायैवैनमावेदयत्याविन्नौ मित्रावरुणौ धृतव्रता इत्यहोरात्रे वै मित्रावरुणा'

---

1) H u. Bb मैत्र° 2) M °मुल्वं 3) So M; desgl. B, ohne Accent; in H u. Bb पांडुरं 4) So M; in H °न्नर्चिषा°; desgl. Bb u. B, ohne Accent. 5) So M; die andern Mss. (H, Bb, B) उपस्पृशत°

अहोरात्राभ्यामेवैनमावेदयत्याविन्ने द्यावापृथिवी ऋतावृधा इति द्यावापृथिवीभ्यामेवैनमावेदयत्याविन्नः पूषा विश्ववेदा इति पशवो वै पूषा पशुभ्य एवैनमावेदयत्याविन्ना देव्यदितिरित्यादित्या वा इमाः प्रजास्ताभ्य एवैनमावेदयत्याविन्नो ऽयमसा आमुष्यायणो ऽमुष्याः पुत्रो ऽमुष्यां विशीति विश एवैनमावेदयति तस्माद्वा एष विशः प्रियो विशे ह्येनमावेदयत्येष ते जनते राजेति जनताया एवैनमावेदयति सोमो ऽस्माकं ब्राह्मणानां राजेति ब्रह्मोद्धरति सर्वेभ्य एवैनमन्येभ्यो भूतेभ्य आवेदयति ब्रह्मोद्धरति तस्मादाहुर्ब्रह्मोद्धृतमिति ब्रह्म ह्युद्धरतीन्द्रस्य वज्रो ऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यादिति धनुः प्रयच्छति वज्रो वै धनुर्वज्रो राजन्यो वज्रेणैव वज्रं समर्धयति शत्रुबाधनाः स्थेति बाणवतो ऽन्तो वै बाणवन्तो ऽन्तो राजन्यो ऽन्तेनैवान्तं समर्धयति त्रीन्प्रयच्छति तिस्रो वै शरव्या दिव्या[1] पार्थिवा[2] समुद्रिया ता अस्माद्योयाव पात प्राञ्चं पात प्रत्यञ्चं पात तिर्यञ्चं पातान्वञ्चं पातोर्ध्वं दिग्भ्य एनं[3] पातेति दिग्भ्य एनं पान्ति मित्रो ऽसीतीममभिमन्त्रयते मित्रस्य ह्येतद्रूपं वरुणो ऽसीतीमं वरुणस्य ह्येतद्रूपं हिरण्यवर्णमुषसो व्युष्टा इत्युद्यता[4] अभिमन्त्रयेतोर्ध्वबाहुस्तिष्ठन्तमभिषिञ्चति बृहत्साम भवति स्वर्गमेवैनं[5] लोकमभिसंतनोति ॥ ३ ॥

Vgl. 2, 6, 9. — TBr. 1, 7, 6, 4 flg.

दिश एनं व्यास्थापयति वज्रेण वा एतदिमा दिशो ऽभिजयति

---

1) So corrigirt; die Mss. दिव्याः 2) So M; die andern Mss. पार्थिवाः 3) So M; H u. Bb एवैनं; desgl. B, ohne Accent. 4) So M; Bb ऽत्युद्यता; H ऽत्युद्यतां; desgl. B, ohne Accent. 5) H u. Bb स्वर्गमि°

त्सवनात्परिशयेत्तस्माद्यावदायुस्तावान्प्राण आयुर्वै ध्रुवो यदग्निष्टोममास्त आयुरेवास्मां निः सर्पत्यायुर्वै ध्रुवो यत्केवलं जुहुयादायुः प्रजानां प्रदध्यात्परिधानीयाया शस्यमानायामवनयति स ह्यन्तो[1] होतुश्चमसे ऽवनयति वैश्वदेवो वै होता वैश्वदेवीरिमाः[2] प्रजाः सर्वासु वा[3] एतत्प्रजास्वायुर्दधाति जनानामित्याहुः सर्वासां वा एतत्प्रजानामायुः सर्वाभ्यः[4] प्रजाभ्यो गृह्यत उभयतोवैश्वानरो गृह्यत उभयतोवैश्वानरो ३ह्ययं प्रा३णो ऽयं वाव वैश्वानरो ३यो ऽयमवाङ् प्राणो यदेष केवल उत्तरे हविर्धाने साद्यते तस्मादेषो ऽर्धभाक् प्राणानामर्धभाजा इतरे हिरण्ये ऽधि सादयेदायुःकामस्यामृतं वै हिरण्यमायुर्ध्रु३वो ऽमृत एवास्यायुर्दधात्युपोप्ते ऽन्ये ग्रहाः साद्यन्ते ऽनुपोप्ते ध्रुवस्तस्मादस्थ्नान्ये[5] पशवः प्रतितिष्ठन्ति मांसेन पुरुषः प्राणा वा उपरवा यदेत उपोप्ते ग्रहाः साद्यन्ते स्वे वा एतद्योनौ साद्यन्ते पूर्वार्धे वा इमे मुखस्य प्राणा एतत्खलु वै हविर्धानस्य पूर्वार्धं यद्दक्षिणं हविर्धानं तस्माद्दक्षिणे हविर्धाने प्राणा वा एत इतरे ग्रहा आयुर्ध्रुवो नव वै प्राणा आयुर्दशमं तस्मादेष दशमो गृह्यते दशमं ह्यायू राजपुत्रो ध्रुवं गोपायति सर्वासां वा एतत्प्रजानामायुर्गोपायति तस्माद्राजपुत्रो वीर्यवत्तमो यं ह्यभिचरेत् ॥ इदमहममुष्यामुष्यायणस्यायुः प्रवर्तयामि ॥ इति ध्रुवं प्रवर्तयेदायुरेवास्य प्रवर्तयति यत्प्रवर्तयेत्सर्वासां प्रजानामायुः प्रवर्तयेऽमुंक्[6] प्रजा ऋच्छेदवर्तिर्यजमानं गृह्णीयात्क्षोधुको ऽध्वर्युः स्यात्तथाक्ष्य एव ॥ ध्रुवं त्वा ध्रुवक्षितिममुमास्था-

1) So Bb u. H; in Ben ह्यन्तो ohne Accent. 2) Mit diesen Worten fängt M wieder an. 3) Von hier in H u. Bb Lücke bis zum folgenden वा 4) So Ben u. M; in H u. Bb सर्वाभ्य एव; B सर्वाभ्या एव 5) So Ben; (cf. TS 6, 5, 2); in M °स्थान्ये, desgl. B, ohne Accent; in Bb अस्थान्ये; in H अस्थान्यै 6) So M; die andern Mss. प्रवर्तयेदामुं

नाच्यावयामि ॥ इत्यास्थानादेवैनं च्यावयति प्रमायुको भवति
५ ध्रुवं वै प्रच्यवमानं विश्वा भूतानु प्रच्यवन्ते प्र यजमान आस्थानाच्च्यवते तदभिमृश्यो दिवि दिव्यान्दृंहान्तरिक्षे अन्तरिक्ष्यान्पृथिव्यां[1] पार्थिवानिति यथास्थामं वा एतत्प्रजा दृंहति स्व आयतने यजमानमायुषा वा एष वीर्येण व्यृध्यते यस्य ध्रुवः स्कन्दत्यायुर्वै ध्रुवस्तदभिमृश्यः ॥ आयुर्धा असि ध्रुवायुर्मे धेहि ॥ इत्यायुरेवास्मिन्दधाति वरो दक्षिणा वरेणैव वरं स्पृणोत्यात्मा हि वरः पुषसेनस्य ह वै भैमसेने ध्रुव उपदद्दास तं मृगयानः स्थैरब्राह्मणा च्युतेनैभ्यो लोकेभ्य आप्याययांचकार ॥ स्वाहा दिव आप्यायस्व ॥ इति स तृतीयं बभूव ॥ स्वाहान्तरिक्षादाप्यायस्व ॥ इति स द्विभागं बभूव ॥ स्वाहा पृथिव्या आप्यायस्व ॥ इति स पुपूरे तदेतेनैवैभ्यो लोकेभ्यो ध्रुव आप्याययितव्यो द्वादशे स्तोत्रे ऽवनयति ॥ द्वादश मासाः संवत्सरः संवत्सरो यज्ञो यज्ञः प्रजापतिः प्राजापत्यः पुरुषो यावानेव पुरुषस्तस्मिन्नायुर्दधाति यत्स्तूयमाने ऽवनयेद्गर्भाः प्रपादुकाः स्युर्यच्छस्यमाने युवानः प्रमीयेरन्यच्छस्ते बहिः प्राणान्दध्यात्संकृच्छस्तायां मध्यतो ऽवनीयो मध्यतो वा एतत्प्रजानामायुर्दधाति ॥ स्वयंभूरसि श्रेष्ठो रश्मिः प्रियो देवानां संसदनीयः ॥ तं त्वा सुभव देवा अभिसंविशन्तु ॥ आयुर्धा असि ध्रुवायुर्मे धेहि ॥ इत्यायुरेवास्मिन्दधाति ॥ वर्चोधा असि ध्रुव वर्चो मे धेहि ॥ इति वर्च एवास्मिन्दधाति ॥ इषो ऽसि त्विषो ऽसि नृम्णो ऽसि क्रतो ऽसि दक्षो ऽसि तस्य

1) In Ben u. M °रिक्षे तेरिक्ष्यान् (in M das य des Adj. aber zuerst geschrieben und erst dann als del. bezeichnet); cf. 1, 3, 15. 2) So Ben u. M; in H u. Bb यथास्थामं; B यथाकामं 3) So Ben u. M; die andern Mss. °मायुषो 4) So M; in B °दृंहाय; H u. Bb °दृंहान; Ben? 5) M सूयमाने 6) Ben त्विषो

त इषस्य त्वेषस्य नृम्णस्य व्रतस्य दक्षस्य भक्षीय[1] स्वस्यै चारणस्य च शूद्रस्य चार्यस्य च यथा त्वं सूर्यासि विश्वदर्शत एवमहं विश्वदर्शतो भूयासम् ॥ इति विश्वदर्शतो ह भवत्यसौ वा आदित्यः स्वयंभूः श्रेष्ठो रश्मिर्यद्येष स्वयमभवदेवं स्वयं भवति य एवं वेद ॥ ६ ॥

Vgl. 1, 3, 15. — TS 6, 5, 2 (dhruvaḥ); Kâṭh. 28, 1; Kap. S. 44, 1.

अथैत ऋतुग्रहाः संवत्सरस्य वा एते विधृत्यै गृह्यन्ते द्वादश मासाः संवत्सरस्तस्माद्द्वादश ऋतुग्रहा मधुश्च माधवश्च वासन्तिका ऋतू असन्ना हूयन्ते ऽसन्ना उहीम ऋतवो नान्योऽन्यमभिप्रपद्यते[2] यदुन्योऽन्यमभिप्रपद्यत[3] ऋता ऋतुरभीयादथ यदन्योऽन्यः[5] प्रपद्यते तस्मादिदमृता ऋतुरनुनिर्हिताः[4] परिप्लवन्त उभयतोमुखमृतुपात्रमुभयतोमुखा उहीम ऋतवो न वै तद्विद्म यत ऋतूनां मुखं सह प्रथमं गृह्णाते सहोत्तमं सह युज्येते[6] सह विमुच्येते[7] चतुर्दश वा एतत्कुर्वतो ऽति वा एतद्रेचयतो ऽस्ति मासस्त्रयोदशस्तमेवैतेनाप्त्वावरुन्ध ऋतुभ्यो वै प्रजाः प्रजायन्ते यत्षडृतुना चतुर्ऋतुभिर्ऋतुभ्यो वावास्मा एतच्चतुष्पदः पशून्प्रजनयतो ऽथ यच्चतुर्ऋतुभिर्द्विर्ऋतुन[8] ऋतुभ्यो वावास्मा एतद्द्विपदः पशून्प्रजनयतो यद्द्विर्ऋतुना द्वौ उहीमा ऋतू अथ यद्दु ऋतुपात्रे द्वौ द्वौ उहीम ऋतवो नानुयजति वैश्वानरो वषट्कारो यदनुयजेद्वैश्वानरमृतुष्वन्ववसृजेदन्धो वा इदमासीदव्यावृत्तमहरासीन्न रात्रिरथ देवा ऋतुग्रहैर्व्यावर्तयन्यदृतुग्रहा गृह्यन्ते ऽहोरात्रयोर्व्यावृत्त्यै

1) Bb भक्षीय 2) So Ben; H u. Bb प्रपद्यति; desgl. B, ohne Accent; M प्रपद्यति 3) Die Mss. schwanken; H u. B प्रपद्यंत; desgl. B, ohne Accent; Ben प्रपद्यति; M प्रपद्यंत 4) Ben ऋतुर° 5) So Ben u. M; desgl. B, ohne Accent; in H u. Bb यदन्योऽन्यः 6) So Ben u. M; die andern Mss. युज्यति 7) So Ben u. M; die andern Mss. मुच्यति 8) In den Mss. द्वि° ohne Accent.

संवत्सरो वै स्वर्गो लोकस्तस्य वा एत आक्रमा यदृतुग्रहा यदृतुग्रहा[1] गृह्यन्ते स्वर्गस्य लोकस्याक्रान्त्यै ॥ ७ ॥

Vgl. 1, 3, 16. — TS 6, 5, 3 (ṛtugrahâḥ); Kâth. 28, 2; Kap. S. 44, 2.

आदित्या वा इत उत्तमाः स्वर्गं लोकमायंस्ते वा इतः प्रतिसंहिताः पुरस्ताद्देवान्यन्तस्ते संवत्सरो वै स्वर्गो लोकः संवत्सरमेतौ कल्पयितुं प्रायेते यदध्वर्यू यदैन्द्राग्नमृतुपात्रेण गृह्णाति संवत्सरं वा एतदन्वारभते स्वर्गाय लोकायाथो ज्योतिरुपरिष्टाद्दधाति स्वर्गस्य लोकस्य समष्ट्या असौ वा आदित्यः शुक्रः पुरुषो वैश्वदेवो यच्छुक्रपात्रेण वैश्वदेवं गृह्णाति तस्मात्पुरुष एवामुं प्रत्यङ् सर्वे ऽन्ये न्यञ्चः पशवो देवाश्च वा असुराश्चास्पर्धन्त ते देवाः प्रातःसवने वैश्वदेवे यज्ञं संस्थापमपश्यंस्तं प्रातःसवने समस्थापयन्यद्वैश्वदेवः प्रातःसवने गृह्यते प्रातःसवने वा एतद्वैश्वदेवे यज्ञं संस्थापयति तेन संस्थितेनारिष्टेन भूतेन प्रचरन्ति देवा वै सर्वे प्रातःसवनमभ्यायच्छंस्त उत्तराभ्यां सवनाभ्यामतिष्ठन्त यद्वैश्वदेवः प्रातःसवने हूयते प्रातःसवने वा एतद्वैश्वदेवे देवतास्तर्पयन्ति तास्तृप्ता उत्तरे सवने अभिसृज्यमाना यन्ति वज्रो वै मरुत्वतीया वज्र एव प्रथमो ऽपगूर्तिर्द्वितीयः स्तृतिरुत्तमो[2] वज्रो वै धनुर्धनुरेव प्रथमः प्रतिहितिर्द्वितीयो विसृष्टस्तृतीयश्चक्रियौ वा एतौ यज्ञस्य यन्मरुत्वतीया अक्षो मध्यमः पक्षसी[3] अभितो मरुद्भिर्वै वी३र्येणेन्द्रो वृषभमहन्नृते मरुद्भ्यो ऽशक्नोद्वी३र्यं कर्तुं यन्मरुत्वतीयो ग्रहो गृह्यते मरुत्वतीयं शस्यते तेन माध्यंदिनं सवनं वीर्यवत्क्रियं

---

1) In Ben nur ein Mal यदृतुग्रहा 2) So Ben u. M; Bb तृतीयस्तमो; desgl. B, ohne Accent; H तृतीयस्तमो 3) Ben पक्षसो oder पक्षसि

सवनान्यृतुमन्ति[1] वेद्धै३ इति पृच्छेदृतुग्रहैः प्रातःसवनमृतुमन्मरुत्वतीयैर्माध्यंदिनं सवनं सावित्रेण तृतीयसवनं मरुत्वतीययोः सवनयोर्दक्षिणा दीयन्ते स्वे वा एतद्योनौ दक्षिणा दीयन्ते परिधयो वा एते यज्ञस्य यन्मरुत्वतीयास्तस्मान्मरुत्वतीयान्दक्षिणा[2] नातिदीयन्ते यदतिदद्याद्यथा बहिष्परिधि स्कन्नमेवं स्याद्यदि कामयेत विडोजीयसी स्यादबलीयः क्षत्रमिति यस्या मरुत्वतीयः पूर्वोऽर्धर्चस्तां[3] पुरोरुचं कुर्याद्विशं वा एतदोजीयसीमकरबलीयः क्षत्रं यदि कामयेत क्षत्रमोजीयः स्यादबलीयसी विडिति यस्या ऐन्द्रः पूर्वोऽर्धर्चस्तां[3] पुरोरुचं कुर्यात्क्षत्रं वा एतदोजीयोऽकरबलीयसीं विशं जामि वा एतद्यज्ञे क्रियते यन्मरुत्वतीयो ग्रहो गृह्यते मरुत्वतीयं शस्यते पशवो वै मरुतोऽजामि पशवस्तेन तदजाम्यृतुपात्रमालभ्य प्रतिगृह्णात्यृतवो वै मरुतः संवत्सर ऋतव आयुः संवत्सर आयुषि वा एतदध्वर्युः घ्ययते वृत्रं वा एष हन्ति यो मरुत्वतीयान्ग्रहान्गृह्णीते माहेन्द्रे सर्वे कामाः सर्वान्वा एतत्कामानाप्नोति सर्वान्व्यश्नोतीन्द्रो वै वृत्रमहꣳस्सोऽन्यान्देवानत्यमन्यत स महेन्द्रोऽभवत्स एतमुद्धारमुदहरत वृत्रं हत्वा तदुद्धार[4] एवास्यैष भाग एव तस्माद्राजा संग्रामं जित्वोदाजमुदजते शुक्रपात्रेण माहेन्द्रं गृह्णाति वदन्ति ग्रावाणो वदन्त्यौलूखला मन्थन्त्याशिरमिन्द्रे वा एतदद्या[5] आगते घोषमकुर्वतात्यो यजमान एव तेजो दधति[6] ॥ ८ ॥

Vgl. 1, 3, 17—25. — TS 6, 5, 4 (âindrâgnaḥ) u.5 (marutvatîyâ mâhendraçca); Kâṭh. 28, 2 u. 3; Kap. S. 44, 2 u. 3.

---

1) M °मति (n. Bl.). 2) So M; ohne Accent (n. Bl.); die andern Mss. मरुत्वतीया 3) Ben तां ohne Accent; M schreibt ताम्; H u. Bb तात्; desgl. B, ohne Accent. 4) Bb तमुद्धारं 5) So Ben; die andern Mss. एतमया 6) So Ben u. M; die andern Mss. दधाति

एतद्वा एषाभ्यनूक्ता ॥

अष्टौ पुत्रासो अदितेर्ये जातास्तन्वस्परि ।
देवाँ उप प्रैत्सप्तभिः परा मार्ताण्डमास्यत्[1] ॥

इत्येष वाव स उपांशुसवनो ग्रावा तस्य वा एष सोमपीथो यदादित्यं मेक्षयन्ति ॥ विवस्वन्नादित्यैष ते सोमपीथः ॥ इति सोमपीथेनैवैनं[2] समर्धयति व्यानो वा उपांशुसवनः प्रजा आदित्यो व्यानं वा एतत्प्रजासु दधाति पशवो वा आदित्यो यद्दध्ना मध्यतः श्रीणाति मध्यतो वा एतत्पशूनां पयो दधात्यथ यत्प्रातरुक्तं[3] तस्मादामा सती पक्वं दुहे यदि कामयेत वर्षेत्पर्जन्या इति ॥ या दिव्या वृष्टिस्तया त्वा श्रीणामि[4] ॥ इति दध्नोपरिष्टादादित्यं श्रीणीयात्पशवो वा आदित्यः पशुभ्य एषो ऽमुतो वर्षति पशूनेव वृष्ट्याभिजिघर्ति[5] यदि कामयेत गर्भाः श्रीयेयुरित्युद्गृह्यादित्यमवेक्षेत गर्भा ह श्रेवुका[6] भवन्ति शुक्रवतीर्वै[7] पूर्वे सवने अशुक्रं तृतीयं सवनं यद्धिदेवत्यानां संस्रवानवनयत्यायायणमभिप्रस्कन्दयति तेन तृतीयसवनं शुक्रवद्देवा असुरान्हत्वा मृत्योरबिभयुस्तेनाधिषिणो[8] न्यञ्चनैषिण एता देवता भूयिष्ठाः प्राविशन्[9] यद्धिदेवत्यांस्तस्माद्धिदेवत्येभ्य आदित्यो निगृह्यते बृहतीभ्यां गृह्णाति पशवो वै बृहतीः प्रजा आदित्य एतावांल्लोको यावदुक्तं यत्संप्रसारयित्वा गृह्णाति लोकं वा एतद्बाह्यं यजमानो भ्रातृव्यस्य वृङ्क्ते ऽथो इमा एव प्रजा अबाह्यायावरुन्द्धे यद्यस्य भ्रातृव्यो यजेत बहिर्वेदि तिष्ठेत्तथा हैनं नावरुन्द्धे पशवो वा आदित्यो ऽमी रुद्रो

1) So M, H, Bb; in Ben °मास्यत्; cf. aber RV 10, 72, 8. 2) H u. Bb °वैनेवं 3) cf. भृतातङ्कु TS 6, 5, 6, 4. 4) Ben °णाति 5) H u Bb वृष्ट्या°; cf. über die verschiedene Betonung dieses Wortes oben 2, 4, 7 u 8; 2, 11, 5. 6) So Ben u. M; die andern Mss. श्रेयुका 7) M (n. Bl.) °वतो वै 8) Ben °षिर्णो 9) Ben प्राविशन्

ऽभिरेतास्त३न्वो यद्विष्ण्या यत्संप्रसारयित्वा[1] गृह्णाति रुद्राणा एतत्पशूनन्तर्दधात्यपिधायोप निष्क्रामति[2] पशूनां गोपीथायादित्यो वै द्विदेवत्यानामनुयाजस्तस्मात्तान्नानुयजति[3] द्विदेव३त्या वा आदित्यस्य प्रयाजास्तस्मात्तान्नानुयजति[4] पशवो वा आदि३त्यो ऽमी रुद्रो ब्राह्मण उपद्रष्टा यद्दीक्षमाणो जुहुयात्प्रधीयमानानामेषामुपद्रष्टा[5] स्यादन्यदीक्षमाणेन[6] होत३व्यमनुपद्रष्टैषां[7] भवति ॥ ९ ॥

Vgl. 1, 3, 26 — TS 6, 5, 6 (âdityagrahaḥ); Kâṭh 28, 6.

॥ इति खिलकाण्डे षष्ठः प्रपाठकः ॥

---

गायत्रो वै देवानां सविता गायत्र्या एष लोके सोमो गृह्यते यदाग्रायणस्तस्मादाग्रायणात्सावित्रो निर्गृह्यते ३सो ऽद आ तृतीयात्सवनात्परिश्रयेत्क्रियमाणस्य[8] क्रियमाणस्य प्रसवायान्तरिक्षं वा अन्तर्या३मो ऽन्तरिक्षमिमाः प्रजा यदन्तर्यामपात्रेण सावित्रं गृह्णाति सविता वा एतत्प्रजाः प्रसुवति प्रजननायासन्नो हूयते ऽसन्ना ३हीमाः प्रजा नैलयन्ति नानुयजति यदनुयजेत्सृष्टिं प्रजानां वि-

---

1) So Ben u. M; H u. Bb संप्रसर्पयित्वा; B संप्रर्पयित्वा 2) So Ben u. M; die andern Mss. निष्क्रामयति 3) Ben °मनुपयाजस; Bb तस्मात्तान्नानु 4) Ben तां नानु°; Bb तन्नानु oder तन्नानु; H तन्नानु; M (n. Bl.) u. B तन्नानु° 5) H u. Bb °मेषाम° 6) In Bb स्याद्° ohne Accent. 7) So Ben; desgl. M, ohne Accent (n. Bl.); in H u. Bb मनूपद्रष्टै°; desgl. B, ohne Accent. 8) So das Verbum in H u. Bb betont; in Ben परिश्रयेत्, in M n. Bl. ohne Accent.

छिन्द्यादथो समानपात्रौ ३ह्येतौ सोमौ गृह्येते तस्मान्नानुयजति देवा वै तृतीयसवनमुद्यमं नाशक्नुवन्प्रातःसवने तर्हि सवितासीत्ते देवास्तृतीयसवनमभिपर्यौहँस्तेन तृतीयसवनमुदयच्छन्त यत्सावित्रस्तृतीयसवने गृह्यते सवितृप्रसूता वा एतत्तृतीयँ सवनमुद्यच्छन्ते सावित्रस्य सँस्रवे वैश्वदेवमभिगृह्णाति वैश्वदेवीरिमाः प्रजाः सवितृप्रसूताः खलु वै प्रजाः प्रजायन्ते मनो वै सविता वैश्वदेवीरिमाः प्रजाः सर्वासु वा एतत्प्रजासु मनो दधात्याशीर्मतः सवनस्य गृह्णाति वैश्वदेवत्वाय सुशर्मासि सुप्रतिष्ठान इति यत्स्वित्सोमः सोमे प्रतितिष्ठति बृहदुक्षे[2] नमा इति यद्बृहदिति तेन देवेभ्यो यन्नमा इति तेन पितृभ्य उक्थभाजो वै पितरो ऽस्तोमभाज उक्थ्येष[3] गृह्यते न स्तोत्राय यत्र गृह्यते तच्छस्यते स्व आयतने ॥ १ ॥

Vgl. 1, 3, 27 u. 28. — TS 6, 5, 7 (sâvitraḥ, vâiçvadevaḥ); Kâṭh. 28, 7; Kap. S. 44, 7.

घृतस्य यजत्येष वै प्रथमो धिष्ण्यानाँ यदाहवनीयस्तँ वा एतदग्रे व्याघारयत्यामावैष्णव्या व्याघारयति पराङ् वा एतर्हि यज्ञो ऽग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चालभ्य घ्नन्ति वा एतत्सोमँ यदभिषुण्वन्ति यत्सौम्यः सोमँ वा एतत्संभावयन्ति सोसमाप्याययन्त्यवधिषुर्वा एतत्सोमँ यदभ्यसुषुवुरनुस्तरणी[4] वा एषा सोमस्य यत्सौम्यः पितॄणामनुस्तरणी[5] तस्मात्पितृमत्या यजति दक्षिणा तिष्ठञ्जुहोति दक्षिणा हि पितॄणामुपसदाँ[6] वा एते ऽनुयाजा आमावैष्णव्या घृतस्य यजति[7] सौम्या सोमस्य या एवाद उप-

1) H u. Bb प्रजायन्ते 2) H बृहदुषे; Bb बृहदुषे 3) H u. Bb °थैव 4) M (n. Bl.) °सुषवुर° 5) So M (n. Bl.) ohne Accent, die andern Mss. पितृणा°; s. übrigens auch TS 6, 6, 7, 1. 6) H u. Bb °मुपसदाँ 7) In Bb यजति ohne Accent.

संत्सु देवता अयाक्षीत्ता एतंदमुत्र वा एष भूताय क्रियते यद्वा एतस्य व्यार्धि[1] यत्प्रामायि तदस्यामुं लोकं गच्छत्यथ पूत एवोऽशिष्यते पवित्रं वै सौम्यो यजमानमेवैतेन पुनाति सामदेवत्यो वै सोमः सोमस्य खलु वै सौम्यः साम्ने वा एतद्ध्रियते ॥ सत्रा त एतद्यदु त इह[2] ॥ इति परिपश्यति यो ऽगतासुः स परिपश्यति यो गतासुर्न स परिपश्यति यदि न परिपश्येदथ वदेत् ॥

यन्मे मनो यमं गतं यद्वा मे अपरागतम् ।
राज्ञा सोमेन तद्वयमस्मासु धारयामसि ॥

हृदिस्पृक् क्रतुस्पृग्वर्चोधा[3] असि वर्चो मे धेहि ॥ इत्याशिषमेवाशास्ते ॥ २ ॥

Vgl. TS 6, 6, 7 (sâumyacarughrtayâgânûbandhyâḥ); Kap. S. 45, 3.

अथैते ऽतिग्राह्या[4] देवा वै सोममगृह्णतांथ वा एतानिन्द्रो ऽगृह्णीत सो ऽवेद्वा अहमिमानृते ब्रह्मणः प्रविष्यामीति स ब्रह्मोपाधावत्सोऽब्रह्मणास्तम्नोऽब्रह्म वै गायत्री तस्माद्गायत्रीभिर्गृह्यन्ते यदेवादः परमवाह्यमनवरुद्धं तस्यैते ऽवरुद्ध्यै गृह्यन्ते ये वा अमी वैराजस्य स्तोभा अतिरिक्तास्तैरेते[5] सामन्वन्तः सर्वे वा एत ऐन्द्रा य ऐन्द्र ऐन्द्रः ३सो ऽसा आदित्य इन्द्रः समानमग्निश्चासौ चादित्यो विराजो वै तेज आग्नेयः शक्वरीणामैन्द्रो रेवतीनां सौर्यो यत्र पृष्ठानि युज्यैरंस्तदेताञ्जुहुयात्साम्ना[6] सतेजस्त्वाय सं वा एतद्यज्ञः पश्चा-

1) So Ben u. M; die andern Mss. व्यार्ध्यै 2) Bb यद्गुत्तरहा 3) So M, nur ohne Accent, (n. Bl.); die andern Mss., wie es scheint, हृदिस्पृक् क्रतुस्पृ° 4) So corrigirt; die Mss. °ग्राह्या; vgl. aber weiter unten. 5) Ben °तिरि°; M (n. Bl.) अतिरक्तास् 6) H u. Bb जुहुयात्साम्ना; Ben जुहुयात्साम्ना; M n. Bl. ohne Accent.

स्तोमेन च शस्त्रेण चाधीयते यदतिग्राह्याः[1] प्रत्युत्तब्ध्यै चक्रियौ वा एतौ यज्ञस्य यत्पृष्ठान्युपस्तम्भनमतिग्राह्यास्तस्मात्प्रातःसवने गृह्याः प्रत्युत्तब्ध्यै[2] यदाग्नेयस्तेजस्तेनावरुन्द्धे यदैन्द्र इन्द्रियं तेन यत्सौर्यो रुचं तेन त्रिवृद्वावासा एतात्संमृद्धं ब्रह्मवर्चसं दधाति तेजो वा अग्नि[3]रिन्द्रियमिन्द्रो ब्रह्मवर्चसमसा आदित्यस्तेजसा च वावासा एतद्ब्रह्मवर्चसेन चोभयत इन्द्रियं परिगृह्णाति ॥ अग्नेष्ट्वा ब्रह्मणश्च तेजसा जुहोमि तेजोदा तेजो मा मा हासीन्माहं तेजो हासिषꣳ स्वाहेन्द्रस्य च त्वा क्षत्रस्य चौजसा जुहोम्योजोदामोजो मा मा हासीन्माहमोजो हासिषꣳ स्वाहा सूर्यस्य च त्वौषधीनां च वर्चसा जुहोमि वर्चोदाꣳ वर्चो मा मा हासीन्माहꣳ वर्चो हासिषꣳ स्वाहाग्न आयुःकारायुष्माꣳस्त्वं[4] तेजस्वान्देवेष्वेध्यायुष्मन्तं मां तेजस्वन्तं मनुष्येषु कुर्विन्द्रौजस्कारौजस्वाꣳस्त्वꣳ[5] सहस्वान्देवेष्वेध्योजस्वन्तं माꣳ सहस्वन्तं मनुष्येषु कुरु सूर्य भ्राजस्कार भ्राजस्वाꣳस्त्वꣳ[6] वर्चस्वान्देवेष्वेधि भ्राजस्वन्तं माꣳ वर्चस्वन्तं मनुष्येषु कुरु ॥ एतौ होमा भक्षंकाराश्च भवन्त्येतैर्वाꣳ वै वीर्येण ब्रह्मविश्ववयसा[7] इमाँल्लोकानर्वाचश्च पराचश्च प्राजानीताꣳ[8] सꣳ ह वा[9] असा इमे लोका अर्वाञ्चश्च पराञ्चश्च भान्ति[10] य एवꣳ वेद सुप्रज्ञाना वा[11] इतं इतं लोका अमुतस्त्वा अर्वाञ्चो दुःप्रज्ञानाꣳ[12] एष ह अथैवामुतो ऽर्वाच इमाँल्लोकान्प्रजानाति यस्यैते[13] हूयन्ते ॥ ३ ॥

Vgl. 1, 3, 31—33. — TS 6, 6, 8 (atigrâhyâḥ); Kap. S. 46, 2 u. 3.

---

1) So Ben; in H u. Bb ॰दतिग्राह्याः 2) Bb प्रत्युत्तब्ध्यै 3) Bb अग्नि; H अग्नि) 4) M ॰कारा॰; die Mss. schreiben तं statt त्वं, wie ich corrigirt habe; cf. das Folgende. 5) So Ben; die andern Mss. ॰तं॰ 6) So Ben; die andern Mss. तं॰ 7) Ben ब्रह्मवर्चसा 8) So Ben u. M; in H u. Bb प्राज॰; desgl. B, ohne Accent. 9) Bb वा 10) So Ben u. M; dagegen H u. Bb भान्ति ohne Accent. 11) H u. Bb वा 12) H u. Bb schieben hier noch ein वा ein; desgl. B, ohne Accent. 13) Bb यस्यैते

उपांशुपात्रेण पात्नीवतं गृह्णाति प्राणो वा उपांशुः प्राणेन वा एतं प्रयन्ति प्राणेनोद्यन्त्यथो प्राणानां प्रतिप्रज्ञात्या अथो यत्प्रथमं पात्रं युज्यते तदुत्तमं विमुच्यते प्राणानां गोपीथाय होता वा अद्य प्रातरुपांशुमयजद्वदेत् होता वषट्कुर्याद्यत्पुरोऽकस्तत्पश्चात्परिहरेत्प्रमायुकः स्यात्तस्मादेतमग्नीद्वषट्करोति पुरो ३ग्नीत्प्राणो[1] वा उपांशुः प्राणादधि प्रजाः प्रजायन्ते यदुपांशुपात्रेण पात्नीवतं गृह्णाति प्रजननायासन्नो हूयतेऽसन्ना हि प्रजाः प्रजायन्ते नानुयजति यदनुयजेत्प्रजननमपिहन्यादथो समानपात्रौ ३ह्येतौ सोमौ गृह्येते तस्मान्नानुयजति मिथुनं वै घृतं च सोमश्च यत्पात्नीवतं घृतेन श्रीणाति[2] मिथुनत्वाय बृहस्पतिसुतस्य त इति ब्रह्म वै बृहस्पतिर्ब्रह्मणो वै योनेः प्रजापतिः प्रजा असृजत ब्रह्मणो वा एतद्योनेर्यजमानः प्रजायत इन्द[3] इन्द्रियावता इतीन्द्रियं हि गर्भो ऽग्ना३इ[4] पत्नीवा३निति[5] मिथुनं वा अग्नीश्च पत्नीश्च सजूस्त्वष्ट्रा सोमं पिबेति त्वष्टा हि रूपाणि विकरोति घृतं वै देवा वज्रं कृत्वा सोममघ्नन्नभि खलु वा एतं[6] घारयन्ति यत्पात्नीवतं घृतेन श्रीणातीन्द्रियेण वा एतत्पत्नी व्यृधयति तस्मान्निरिन्द्रिया स्त्री पुमानिन्द्रियवांस्तस्मात्पुमांसः[7] सभां यन्ति न स्त्रियो यदितरान्सोमाञ्छ्रीणीयुर्न पात्नीवतं स्त्रियः सभामीयुर्न पुमांसा इन्द्रो वै वृत्रमहंस्तस्य यन्मूर्धा-

1) Die ३ fehlt in den Mss. und ist von mir ergänzt. 2) In H u. Bb werden hier die letzten Sätze, von यदनुयजेत्प्रजननमपिहन्यादथो u. s. w. bis hierher (श्रीणाति) wörtlich wiederholt. 3) So M; die andern Mss. इन्द्र; s. aber auch 1, 3, 29. 4) Die ३ als Zeichen der Plutirung fehlt in den Mss. und ist von mir hinzuergänzt; cf. 1, 3, 29. 5) Die ३ als Zeichen der Plutirung fehlt in den Mss.; cf. 1, 3, 29; H u. Bb. पत्नीवानिति; Ben पत्नोवानीति; M पत्नीवानिति 6) So Ben u. M; die andern Mss. एता 7) So im Anschluss an M पुमानिन्द्रीयवांस्तस्मात्पुमांसः; die andern Mss. पुमान्निरिन्द्रियवांस्तस्मात्पुमांस

नमुद्रुजत्सं[1] द्रोणकलशो ऽभवत्ततो यः सोमः समस्रवत्स हारियोजनस्तस्मादेतं[2] द्रोणकलशेन जुहोति योनिर्ह्यस्यैष इन्द्रो वृत्रं हत्वा तस्य यत्क्लोमासीत्[3] हृदयात्सोमं समसिञ्चत्स हारियोजनो[4] ऽभवत्स इन्द्रो ऽमन्यत यदिममसु३ये[5] सोमं होष्यामि तदन्वसुरा आभविष्यन्ति यन्न होष्यामि तदन्वभविष्यन्तीति तं संस्थिते प्रहृतेषु परिधिष्वजुहोद्यत्संस्थिते प्रहृतेषु परिधिषु जुहोति तत्स्विदुभयमकर्जुहोत्यह[6] संस्थिते जुहोत्यतिरिक्तो वा एष ऋत्विजां य उन्नेता तस्मादेतं न वृणीते न वषट्करोत्यत्येष सोमो ऽरेचि स वा उन्नेतारमेवाभ्यतिरिच्यते ऽध्वर्युर्वै पूर्वान्सोमान्जुहोति[7] यदेतमध्वर्युर्जुहुयादाहुतीः संसृजेत्समदं कुर्यात्तस्मादेतमुन्नेता जुहोति प्रजापतिर्वा एतममन्यत सोमं होष्यंस्तमग्निरब्रवीन्न मयि त्वमेतमसु३ये[8] सोमं होष्यस्यमृतमद्वितीयं[9] द्वितीयमस्त्विति यद्धानाभिः श्रीणाति मृतत्वायाथो द्वितीयत्वायाथैता धाना यत्र वा अदो देवेभ्यः कामदुघाः काममदुह्र तदेता अपिदुदुह्रे तत्पुष्टिमेवैताभिरवरुन्द्धे प्रजापतिर्वा आयायणो यदेषो ऽतिरिच्यते तस्मादयमतिरिक्तो ऽपरिमित इमाः प्रजा अभिपवत ऋक्सामे वा इन्द्रस्य हरी तयोः परिधय आधानं निराधानाय खलु वा अश्वाय घासमपिदधाति[10] यत्संस्थिते प्रहृतेषु परिधिष्वजुहोद्यत्संस्थिते[11] प्रहृतेषु परिधिषु जुहोति निराधानाभ्यामेवाभ्यां घासमपिदधाति पशवो वै धाना यत्संखादेत्पशूनिह्यंस्याद्यद्

1) Ben u. M यें 2) So Ben; die andern Mss. हार्योजनस्; diese Form auch Kap. S 44, 9; dagegen Kâth. 28, 9 हारियोजनः 3) M यं; Bb यं 4) So Ben; die andern Mss. हार्योजनो; s. übrigens 1, 3, 30; Kâth. 28, 9 हारियोजनः 5) So Ben; die andern Mss. •सुश्ये• 6) So Ben u. M; die andern Mss. जुहोत्वाह 7) M पूर्वा॰त्स• 8) So Ben; die andern Mss. •सुश्ये• 9) Bb होष्यंस्त• 10) Ben •दधति 11) In den Mss. ist das Verbum ohne Accent.

सखादेर्दयताः[1] स्युः संदृश्य[2] रथ्यै त्वा पौषाय नैत्युपवपति[3] तन्त्विदुभयमकः पशूनां यत्यै भुञ्जन्त एनं पशवा उपतिष्ठन्ते ॥ ४ ॥

Vgl. 1, 3, 29 u. 30. — TS 6, 5, 8 (pâtnîvato grahaḥ) u. 9 (hâriyojanaḥ); Kâṭh. 28, 8 u. 9; Kap. S. 44, 8 u. 9; 46, 4.

यज्ञेन वै देवाः स्वर्गं लोकमायꣳस्ते ऽमन्यन्तानेन वै नो ऽन्ये लोकमन्वारोक्ष्यन्तीति ते छन्दाꣳस्यपश्यꣳस्तानि व्यत्यषजन्स्वर्गस्य लोकस्याननुख्यात्यै[4] यच्छन्दाꣳसि व्यतिषजति लोकं वा एतच्छन्दाꣳसि यजमानो भ्रातृव्यस्य मोहयति स्वर्गस्य लोकस्याननुख्यात्यै[5] देवेषु वा अन्यानि छन्दाꣳस्यासन्नसुरेष्वन्यानि कनीयाꣳसि देवेष्वासञ्ज्यायाꣳस्यसुरेषु ते देवाः कनीयोभिश्छन्दोभिर्ज्यायाꣳसि छन्दाꣳस्यसुराणामवृञ्जत यत्कनीयोभिश्छन्दोभिर्ज्यायाꣳसि छन्दाꣳसि विशꣳसति लोकं वा एतच्छन्दाꣳसि यजमानो भ्रातृव्यस्य वृङ्क्ते लोकमेनमच्छन्दस्कमकरनुष्टुभꣳ सर्वाणि छन्दाꣳस्यभिसꣳशꣳसति वाग्वा अनुष्टुब्वानुष्टुभः पुरुषस्तस्मात्पुरुषः सर्वा वाचो वदति पशवो वै छन्दाꣳसि वागनुष्टुब्वानुष्टुभः पुरुषो यत्सर्वाणि छन्दाꣳसि सꣳशस्यानुष्टुभमुत्तमाꣳ शꣳसति तस्मात्पुरुष उपरिष्टादवाचः पशूनत्ति सर्वाणि छन्दाꣳसि सꣳशꣳसति[6] प्रजापतिर्वै छन्दाꣳसि प्रजापतिमेवाप्नोति षडक्षराणि स्तोत्रादतिरिच्यन्ते षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति तच्चत्वारि शस्त्रे पुनरुपावर्तन्ते[7] चतुष्पदस्तेन पशूनवरुन्द्धे ऽथ द्वे ए-

1) So M; die andern Mss. °र्दयत्ताः 2) M संदृश्य 3) Ben °वसति; in H u. Bb सैत्युपवयति 4) So corrigirt; die Mss. schwanken; M °ख्यानुकख्यात्यै; Ben u. H ख्यानुख्यात्यै; desgl. B, ohne Accent; Bb °ख्यानुख्यात्यै 5) Die Mss. schwanken; M °ख्याननुकख्यात्यै; H °ख्याननुख्यात्यै; desgl. B, ohne Accent; Ben °ख्यानुख्यात्यै; Bb °ख्यानुख्यात्यै 6) H सꣳशꣳ° 7) So M, H, Bb; die andern Mss. °वर्तते

वा अतिरिच्येते[1] द्वे विराजमति सत्यं चानृतं च विराजमेवाप्नोति ॥ ५ ॥

Vgl. TS 6, 6, 11, 5 u. 6 (shodaçigrahaḥ).

प्रजापतिर्वै देवेभ्यो यज्ञान्व्यकल्पयत्सो ऽमन्यतात्मानमन्तरगामिति तेषां वा इन्द्रियाणि वीर्याणि पुनः समवृहत्स षोडश्यभवदेष वै तर्हीन्द्रो[2] देवानामासीदवमतमः[3] शिथिरतमस्तस्मै वा एतं षोडशिनं[4] प्रायच्छत्तेनेन्द्रो ऽभवत्ततो देवा अभवन्परासुरास्तद्य एवं विद्वानेतं षोडशिनं[5] गृह्णीते भवत्यात्मना परास्य भ्रातृव्यो भवति प्रजापतिर्वै देवेभ्यस्तनूर्व्यकल्पयत्तासां या हरिवत्यासीत्तामात्मन्नशिंषत[6] प्रेणा यद्धरिवती पुरोरुग्ग्रहस्य भवति यैवास्य हरिवती प्रिया तनूस्तामाप्नोति[7] न षोडशी नाम यज्ञो ऽस्तीत्याहुरथ कस्मात्षोडशीति यत्स्तोत्रेण च शस्त्रेण च संपद्यते तस्मात्षोडशी यज्ञेन वै देवाः स्वर्गं लोकमायंस्ते[8] एषां न प्राभवंस्तस्मिन्वा एतं षोडशिनं[9] प्रत्ययच्छंस्तेनामुं लोकं व्याप्नुवंस्तदमुष्य वाव लोकस्य व्याप्त्यै षोडशी गृह्यते ऽमुष्य लोकस्य समष्ट्या अग्निष्टोमे राजन्यस्य गृह्णीयादशान्त एनं वज्रो भूत्वा इन्द्धे ऽतिरात्रे ब्राह्मणस्य वज्रो वै षोडशी भ्रातृव्यो ऽशान्तो यजमानं हिंसितो रात्रिरेव वज्रं शमयति प्रातःसवने गृह्यस्तेजो वै प्रातःसवनं तेजस[10] एव वज्रं निर्मिमीते माध्यंदिने सवने गृह्य ओजो वै माध्यंदिनं सवनमोजस एव वज्रं निर्मिमीते तृ-

---

1) M ॰च्याते 2) So M; in Ben तर्हींद्री; Bb तर्ह इन्द्रो· H तं ह इन्द्रो; B ते होन्द्रो 3) Ben u. M ॰मंततमः 4) Ben ॰षीनं 5) Ben ॰षीनं 6) Die Mss. schwanken; H u. Bb ॰मात्मनशषत, desgl. B, ohne Accent; M ॰मात्मन्नशिंषत; Ben ॰मात्मन्नशंषत् (eig. ॰षति geschrieben, dann corrigirt). 7) So Ben u. M; in H u. Bb तामेवाप्नोति; desgl. B, ohne Accent. 8) M ॰न्त्सुंस्ते 9) Ben ॰षीनं 10) Bb तेज

तीयसवने गृह्यः पशवो वै तृतीयसवनं पशुभ्य एव वज्रं निर्मिमीते यत्प्रातःसवने गृह्णीयाद्वज्रा उत्तरे सवने अभ्यतिरिच्येत[1] यन्माध्यंदिने सवने मध्यतो वज्रो निहन्यात्तृतीयसवने[2] गृह्यस्तत्सर्वेषु सवनेषु गृह्णाति न पूर्वे सवने आर्तिं नीतः[3] पञ्चदशः का३र्यो वज्रो वै पञ्चदशो वज्रमेवास्मा आधात्तेन विजितिं भूतिं गच्छति षोडशी का३र्यो यजमानो वै पञ्चदशो वज्रः षोडशी वज्रमेवास्मा आधात्स एनं भूत्यै प्रेम्णा इन्द्धे सप्तदशः कार्यः प्रजापतिर्वै सप्तदशः प्राजापत्यः षोडशी स्व एवैनꣳ योनौ दधात्येकविꣳशः[4] का३र्या एकविꣳशतिधाम्नी वा अनुष्टुब्बानुष्टुभः षोडश्येतद्वा अस्यायतनतमं तस्मादेकविꣳशः कार्यो मध्यमे ऽहꣳस्त्रिरात्रस्य गृह्यो मध्यमꣳ वा अहस्त्रिरात्रस्य शिथिरमह्नो दृढिम्ने ऽशिथिरत्वाय चतुर्थे ऽहꣳश्चतूरात्रस्य[5] गृह्यश्चतुर्थꣳ वा अहश्चतूरात्रस्य[5] शिथिरमह्नो दृढिम्ने ऽशिथिरत्वाय चतुर्थे चतुर्थे ऽहन्नहीनस्य गृह्यश्चतुर्थे चतुर्थꣳ वा अहरहीनस्य[6] शिथिरमह्नो दृढिम्ने ऽशिथिरत्वाय न त्रिरात्रे ऽवकल्पते[7] द्वे वा एते छन्दसी गायत्रं च त्रैष्टुभं चाछन्दस्कमनायतनं गृह्णीते ऽनायतनो यजमानो भवत्युत्तरे ऽहन्त्रिरात्रस्य गृह्यो रात्रिमेवायतनमभ्यतिरिच्यते[8] ॥ ६ ॥

Vgl. 1, 3, 34. — TS 6, 6, 11, 1 flg. (shoḍaçigrahaḥ).

अथैषो ऽदाभ्यो देवाश्च वा असुराश्चास्पर्धन्त ते देवा एतमपश्यꣳस्तमगृह्णत तानसुरा नादभ्नुवꣳस्तददाभ्यस्यादाभ्यत्वं नैनं भ्रातृव्यो दभ्नोति य एतं गृह्णीते घ्नन्ति वा एतत्सोमꣳ यदभिषुण्वन्त्येषा वै सो-

---

1) Ben °च्येते (das Vorhandensein des e fraglich). 2) So M; die andern Mss. निहन्यात् 3) Ben नीत: 4) Bb दधाते° 5) Ben u. M चतुर° 6) Ben °हिंनस्य 7) So Ben u. M; die andern Mss. °कल्पेते 8) So Ben; die andern Mss. रात्रीम°

मस्यातिमोक्षिणी तनूर्यानेतानंशूनप्रवृहन्त्येवं वा एतं लोकं[1] यजमानो ऽन्वतिमुच्यते' वि वा एतद्यज्ञं छिद्यते यत्सवनानि संतिष्ठन्ते' यदेतानंशून्पुनरप्यस्यति' यज्ञस्य संतत्या अविच्छेदाय' वृष्ट्यै वा एष गृह्यते' मरुन्नामानि हि' वर्षति[2] पर्जन्यो यद्वैष गृह्यते' ऽग्निः प्रातः सवनात्पात्वस्मानिति' सवनानि वा एतेन देवा असुराणामवृञ्जत' सवनान्येवैतेन यजमानो भ्रातृव्यस्य वृङ्क्ते' ऽग्नये त्वा प्रवृहामि गायत्रेण छन्दसेति' छन्दांसि च वा एतेन देवताश्च[3] देवा असुराणामवृञ्जत' छन्दांसि चैवैतेन देवताश्च यजमानो भ्रातृव्यस्य वृङ्क्ते' चतुराधूनोति[4]' दिशो वा एतेन देवा असुराणामवृञ्जत' दिश एवैतेन यजमानो भ्रातृव्यस्य वृङ्क्ते' जीवग्रहो वा एष सोमस्याहुतस्य[5] ह्यनभिषुतस्य गृह्यते' यजुषा च वा आहुत्या च यज्ञः संततो' यद्यजुर्वदन्नाहुतिं जुहोति यजुषा चैवाहुत्या च यज्ञं संतनोति' देवा वै सोममगृह्णत' स प्रजापतिरवेद्यो वा इहं प्रथमः सोमं ग्रहीष्यते स इदं भविष्यतीति' स एतमगृह्णीत सो ऽभवद्यो भूतिकामः स्यात्स एतं गृह्णीते' भवति' यदि शक्नोति ग्रहीतुमुभौ भवतो' यदि न शक्नोति ग्रहीतुमुभौ न भवतः' पराचीनेन प्राणता ग्रहीतव्यः' पराङ् हि स प्राणैः श्रियो ऽन्तमगच्छदपानता ग्रहीतव्यो' ऽपानं[6] हि स तमगृह्णीत' प्राण्यापान्याव्यानता[7] ग्रहीतव्यो' ऽव्यवानं[8] हि स तमगृह्णीत' यद्व्यवानेत्प्राणान्विच्छिन्द्याद्यदि व्यवानेद्धिरण्येनापिदध्यादमृतं वै हिरण्यममृतेनैव प्राणान्संदधाति[9]' सकृदभिषुणोति' सकृद्गृह्णात्येको वै प्रजापतिः' प्रजापतिमेवाप्नोति' चतुःस्रक्तिना ग्रहीतव्यश्चतुःस्रक्तिना वा एतं

---

1) So Ben u. M; die andern Mss. एतल्लोकं 2) In H u. Bb वर्षति ohne Accent. 3) देवताश्च fehlt in Ben. 4) Ben °धुनोति 5) M °हुतस्य 6) So Ben; in M, H u. Bb °तव्यो पानं 7) M प्राण्यापान्या° 8) H u. Bb °तव्यो व्यवानं 9) M प्राणांसं°

प्रजापतिरगृह्णीत स सर्वासु दिक्ष्वार्ध्नोत्स सर्वासु दिक्ष्वृध्नोति[1] य एवं विद्वानेतं चतुःस्रक्तिना गृह्णी३ते ऽपो वै सोमस्य रसः प्रविष्टः सोममपां रसो यथा वा इदं गावौ संजग्माने अन्यान्यां हत एवं वा एतौ संजग्माना अ३न्यो ऽन्यस्येन्द्रियं वीर्यं विनिर्हतस्तयोर्वा एष रसो यद्दधि यद्दध्ना जुहोति स्वेनैवैनौ रसेन शमयति ॥ ७ ॥

Vgl. 1, 3, 36. — TS 6, 6, 9 (adâbhyaḥ) u. 10 (aṃçugrahaḥ).

कृष्णग्रीवाग्नेयो मेषी सारस्वती बभ्रुः सौम्यः श्यामः पौष्णः शितिपृष्ठो बार्हस्पत्यः पिशङ्गो वैश्वदेवो वृष्णिरैन्द्रः कल्माषो मारुतः सꣳहित ऐन्द्राग्नो ऽधोरामः सावित्रः पेत्वो वारुणः प्रजापतिः प्रजाः सृष्ट्वा रिरिचानो ऽमन्यत स एतामेकादशिनीमपश्यत्तयात्मानमाप्रीणीत यज्ञो वै प्रजापतिस्तद्य एवं विद्वानेतामेकादशिनीं विबध्नीते यदेवास्यात्मन ऊनं[2] तदाप्रीणीते प्रजापतिः प्रजाः सृष्ट्वा रिरिचानो ऽमन्यत स एतानीन्द्रियाणि वीर्याण्यपश्यत्तानि द्वन्द्वमात्मानमभिसमबध्नीताग्नेयो वाक्सारस्वतीन्द्रियं सोमो वाचं चैवेन्द्रियं चात्मानमभिसमबध्नीत पुष्टिः पौष्णो ब्रह्म बृहस्पतिः पुष्टिं चैव ब्रह्म चात्मानमभिसमबध्नीत बलं विश्वे देवा वी३र्यमिन्द्रो बलं चैव वीर्यं चात्मानमभिसमबध्नीतौजो मरुतः सह इन्द्राग्नी ओजश्चैव सहश्चात्मानमभिसमबध्नीत प्रसवाय सावित्रो निर्वरुणत्वाय वारुण आग्नेयाय सर्वा उपबध्यन्ते ऽग्निर्वै सर्वा देवताः सर्वाभ्य एव देवताभ्या उपबध्यन्ते मिथुनत्वायैव सारस्वत्येष यत्सौम्यः सौ-

1) So corrigirt; die Mss. schwanken; Ben दिक्ष्वुरिध्नोति; M दिक्षु, ऋध्नोति; H u. Bb दिक्ष्वी ऋध्नोति; desgl. B, ohne Accent. 2) Ben ऊर्णं; H u. Bb ऊर्णं

मो वै रेतोधा रेतो ऽस्मिन्दधात्यथ यत्पौष्णः प्रजननं वै पूषा प्रजननाय ब्रह्म बृहस्पतिर्वैश्वदेवीरिमाः प्रजा ब्रह्म वा एतत्पुरस्तादासां प्रजानामत्यौहीद्यद्ब्रह्मण एवैमाः प्रजा अनुकाः करोति क्षत्रमिन्द्रो विण्मरुतो विशं वा एतत्क्षत्राय नियुनक्त्यथो[1] विशमेव क्षत्रायानुकां करोत्योज इन्द्राग्नी ओजसा वा एतद्विशं क्षत्राय परिगृह्णात्यालब्ध आग्नेय आलब्ध ऐन्द्रो ऽथैष ऐन्द्राग्न आलभ्यते ब्रह्म चैव क्षत्रं च सयुजा अकर्यदग्निश्चेन्द्रश्च भूयिष्ठभाजौ देवतानां तस्माद्ब्राह्मणश्च राजा च भूयिष्ठभाजौ मनुष्याणां प्रसवाय सावित्रो निर्वरुणत्वाय वारुणः समुद्रो वै वरुणो दक्षिणा समुद्रो यद्वारुणो दक्षिणार्ध आलभ्यते[2] यजमानस्य निर्वरुणत्वायैतद्वा एषाभ्यनूक्ता ॥

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः ।
अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥

इति ॥ ८ ॥

Vgl. TS 6, 6, 5 (paçvekâdaçinî).

ये देवानां बलपतयस्तेभ्यो दक्षिणार्ध आलभ्यन्ते तस्मात्प्रजा दक्षिणाभिजयन्तीर्यन्ति यदाग्नेयः सौम्यो बार्हस्पत्यस्ते सार्धमालभ्यन्त ओज एवैतत्संधीयते यदाग्नेयश्च बार्हस्पत्यश्च सौम्यमभितस्तेजसा च वावासा एतद्ब्रह्मवर्चसेन चोभयत इन्द्रियं परिगृह्णात्येकादश वा एतेषां पशूनां देवता मेषी सारस्वती देवतानां द्वादशी यदेषातिरिच्यते तस्मात्स्त्रियः पुंसो ऽतिरिच्यन्ते ऽथ द्वे एकस्य रशने द्वे एकस्य तस्मात्स्त्रियं जातां परास्यन्ति न पुमांसमथ स्त्रिय एवातिरिच्यन्ते यं

1) Bb विंशुन॰ 2) H u. Bb ॰भ्यंते 3) So M, H u. Bb, in Ben परास्यंति

वा अमुमिन्द्रो वृत्राय वज्रं प्राहरत्स त्रेधाभवद्यद्दयं तेजा आसीत्स स्फ्यो[1]ऽभवद्यन्मध्यं स रथो यज्ञघनं स यूपः स्फ्येन परिलिखति रथाक्षेण विमिमीते यूपो भवति वज्र एवैष संभ्रियत एतावती वा इयं पृथिवी यावती वेदिर्वज्र एकादशिनी तिरश्चीं मिनोति वज्रेण वा एतदिमां जयति दक्षिणत उन्नता मेतव्या देवयजनस्य रूपमथो वज्रं वा एतद्यजमानो भ्रातृव्यायोच्छ्रयति मध्यतः समा मेतव्याः समत्वाय समं हि पशवो ऽनूपतिष्ठन्ते पशुभिरेवैनं सम्यञ्चं दधाति यं कामयेत पितृलोक ऋध्नुयादिति तस्योपरसंमितां मिनुयात्पितृलोक एव ऋध्नोत्यथ यं कामयेत मनुष्यलोक ऋध्नुयादिति तस्य मध्यसंमितां मिनुयान्मनुष्यलोक एव ऋध्नोत्यथ यं कामयेत देवलोक ऋध्नुयादिति तस्य चषालसंमितां मिनुयाद्देवलोक एव ऋध्नोति तासां वा एषा समृद्धतमा या चषालसंमिता तस्माच्चषालसंमिता मेतव्या समृद्धत्वाय यस्य पश्चादुपस्थः पुरस्तान्निर्णतं तं मिनुयाद्यं कामयेत भ्रातृव्याय लोकं कुर्याद्यजमानं निर्बाधेतेति भ्रातृव्यायैव लोकं करोति यजमानं निर्बाधते ऽथ यस्य पुरस्तादुपस्थः पश्चान्निर्णतं तं मिनुयाद्यं कामयेत[2] यजमानाय लोकं कुर्याद्भ्रातृव्यं निर्बाधेतेति यजमानायैव लोकं करोति भ्रातृव्यं निर्बाधते सर्वे ऽमिष्ठाः का३र्या या अमिष्ठा अश्रयस्ता अमिष्ठाः का३र्यास्तेन सर्वे ऽमिष्ठा अथ यदमिष्ठादधि रशना विह्रियन्ते[3] तेन सर्वे ऽमिष्ठा नाना वा एतेषां पशवो नाना देवता अथ य एष द्वादशो यजमान

1) Dies Wort in den Mss. ohne Accent. 2) M (n. Bl.) यं कामं कामयेत 3) So corrigirt; Ben विह्रियन्ते; desgl. M, ohne Accent; in H u. Bb विह्रीयंते; B विहीयंते

एवैतस्य पशुर्यदस्मै पशुं[1] न निर्दिशेत्प्रमायुको[2] यजमानः स्याद्यं द्विष्यात्तं ब्रूयात् ॥ असौ ते पशुः ॥ इति तमेवास्मै पशुं निर्दिशति प्रमायुको भवति यद्यभिचरेत् ॥ इदमहममुमामुष्यायणममुष्याः पुत्रमिन्द्रवज्रेणाभिनिदधामि[3] ॥ इत्यभिनिदध्यादिन्द्रवज्रेणैवैनमभिनिदधाति प्रमायुको भवत्यथो द्वादशस्यैवैष मासो ऽवरुद्ध्यै ॥ ९ ॥

Vgl. TS 6, 6, 4 (yûpâikâdaçinî).

॥ इति[4] खिलकाण्डे सप्तमः प्रपाठकः ॥

---

मनोर्वै पात्राण्यासंस्तेषां समाहन्यमानानां यावन्तो ऽसुरा उपाशृण्वंस्तावन्तस्तदहर्नाभवन्नथ वा एतौ तर्ह्यसुराणां ब्रह्माण आस्तां[5] तृष्टावरूत्री[6] तौ अब्रुवंश्चिकित्सत नौ[7] इति तौ अब्रूतां मनो यज्वा वै श्रद्धादेवो ऽसीमानि नौ पात्राणि देहीति तानि वा आभ्यामददात्तान्यग्निना समक्षापयतां तान्ज्वालानृषभः[8] संमलेढ्[V] तं सा मेनिरन्वपद्यत[9] तस्य रुवतो यावन्तो ऽसुरा उपाशृण्वंस्तावन्तस्तदहर्नाभवंस्तौ अब्रूतां[10] मनो यज्वा वै श्रद्धादेवो ऽस्यनेन त्वा

1) M (n. Bl) पशू 2) Die Mss. schwanken; Ben °शेत्तत्प्र°; M °शेत् । प्र°; H u. Bb °शेत प्र°; desgl. B, ohne Accent. 3) So Ben u. M; die andern Mss. °दधाति 4) Das इति fehlt in den Mss. 5) So Ben u. Bb; in H ohne Accent; M n. Bl. ohne Accent. 6) So Ben; desgl. M, ohne Accent (n. Bl.); die andern Mss. त्रिष्टावरूत्री; cf. त्रिष्टावरूत्री (sic) असुरब्रह्मौ Kâṭh. in Ind. St. 3, 461 flg.; Kap. S. 46, 4 त्वष्टावरूत्री 7) M n. Bl. चीकित्सतत्मा 8) Die Mss. schreiben तां ज्व° 9) Ben मेनिर° 10) H अब्रूतां

ऋषभेण याजयावेति[1] तेन वा एनमयाजयतां तस्य श्रोणिमनवत्ता[2] सुपर्ण उदमथ्नात्सा मनावी[3] उपस्थमापद्यत ता सा मेनिरन्वपद्यत[4] तस्या वदन्त्या यावन्तो ऽसुरा उपाशृण्वंस्तावन्तस्तदहनाभवंस्तौ[5] अब्रूतां मनो यज्वा वै श्रद्धादेवो ऽस्यनेया त्वा पत्न्या याजयावेति[6] तां प्रोक्ष्य[7] पर्यग्निं कृत्वेध्माबर्हिरछैतां स इन्द्रो ऽवेदिमे वै तौ असुरमायौ मनुं पत्न्या व्यर्धयत इति तमिन्द्रो[8] ब्राह्मणो ब्रुवाण उपैत्स्तो ऽब्रवीन्मनो यज्वा वै श्रद्धादेवो ऽसि याजयानि त्वा कतमस्त्वमसि ब्राह्मणः ॥

किं ब्राह्मणस्य पितरं किमु पृछसि मातरम् ।
श्रुतं चेदस्मिन्वेद्य[9] स पिता स पितामहः ॥

केनेत्याभ्यां ब्राह्मणाभ्यामितीशे ऽहं ब्राह्मणयोरितीशिष हीत्यब्रवीदतिथिपतिर्वावातिथीनामीष्ट इति स द्वितीया वेदिमुद्धन्नुमुपापद्यत तौ इध्माबर्हिर्बिभ्रता ऐतां[10] तावब्रूतां किमिदं करोषीतीमं मनुं याजयिष्यामीति केनेति युवाभ्यामिति ता अविद्तामिन्द्रो[11] वावेति तौ न्यस्येध्माबर्हिः ऋत्वायेतां[12] तौ यदधावतां परस्तादेवेन्द्रः प्रत्यैत्[13] ॥ तौ वृशश्चैवावयश्चाभवतां[14] तद्वृशस्य[15] चैवावयस्य[16] च जन्म

---

1) Bb याजयावेति 2) Ben श्रोणी°; M (u. Bl.) °नवत्ता 3) H u. Bb मानांवा 4) Ben मेनीर° 5) M °भवंस्ता 6) M (u. Bl.) याजयातेति 7) Ben प्रोष 8) So Ben u. M; die andern Mss. तामिंद्रो 9) H u. Bb वेद्य: 10) So corrigirt; Ben एतां; M यैतां; H यैतां; desgl. B, ohne Accent; Bb यैतां 11) H अविदिता° 12) Bb पंचायि° 13) So M; Ben प्रतै; H u. Bb पतै; desgl. B, ohne Accent. 14) So M; so auch Ben; dann aber über dem य ein व als Correctur gesetzt. Kap. S. 46, 4 रिवश्च यवायश्च; auch Kâṭh. 30, 1 यवायश्च; cf. येवाष im Pet. W.; H u. Bb चैवाखस°; desgl. B, ohne Accent. 15) Bb वंशस्य 16) So Ben चैवावस्य, aber über dem य später als Correctur ein व gesetzt. In M eigentlich auch चैवाय° geschrieben; dann aber das य del. u. व्य geschrieben; H u. Bb चैवाखस्य; desgl. B, ohne Accent.

स मनुरिन्द्रमब्रवीत्स मे यज्ञं स्थापय मा मे यज्ञो विकृष्टो ऽभूदिति सो ऽब्रवीद्यत्काम एतामालब्धाः स ते कामः समृध्यतामथोत्सृजेति तां वा उदसृजंस्तद्धया एव पात्नीवतस्त्वाष्ट्रः स्यात्त्वाष्ट्रा हि पशवो ऽवाचीनं नाभ्याः कार्यो ऽवाचीनं हि नाभ्याः स्त्रिया वीर्यं वीर्यवद्विनाति[1] वा एकादशिनी यज्ञं यत्पात्नीवतः प्रत्युत्तब्ध्यै ॥१॥

Vgl. TS 6, 6, 6 (pâtnîvatapaçuḥ); Kap. S. 46, 4.

अमुष्मिन्वै लोके यजमानो बुभूषत्यमुष्य खलु वा आदित्यस्यासौ लोको यत्सौरीभ्यां जुहोत्यमुष्मिन्वा एतल्लोके[2] यजमानो भवति द्वाभ्यां जुहोति द्विपाद्यजमानः प्रतिष्ठित्यै हिरण्यमवधाय जुहोति हिरण्यज्योतिषमेवैनं स्वर्गं लोकं गमयति बद्धेन जुहोति दक्षिणानां वा एषो ऽन्वारम्भो द्यां गच्छ स्वर्गं गच्छेत्युद्धरति स्वर्गस्य लोकस्य समष्ट्यै रूपं वो रूपेणाभ्येमीति रूपं हिरण्यं रूपं पशवस्तुथो वो विश्ववेदा विभजत्वित्येष वै तुथो[3] विश्ववेदा यदग्निरेष वै तं वेद यो दक्षिणीयो यो ऽदक्षिणीय[4] एतत्ते अग्ने राध एति सोमच्युतमित्यग्नीधे[5] वा एतद्धीयते तत्सोमच्यावयति तन्मित्रस्य पथा नयेत्येष वै मित्रस्य पन्था यद्यज्ञ आग्नेय्याग्नीध्रे जुहोत्याग्नेयं ह्याग्नीध्रं वारुण्या द्वितीयया यदनो वा रथो वा दीयते वारुणं हि तदृतस्य पथा प्रेतेत्येष वा ऋतस्य पन्था यद्यज्ञश्चन्द्रदक्षिणा इति चन्द्रं हि दीयते ब्राह्मणमद्य ऋध्यासं पितृमन्तं पैतृमत्यमित्येष वै ब्राह्मणः पितृमान्पैतृमत्यो य आर्षेयः शुश्रुवान्सुधातुदक्षिणमिति[6] सुधात्वेवास्य यज्ञं

1) M वीर्यावद्   2) So corrigirt; die Mss. एतं वीर्ये   3) Ben तुझो वो   4) So M; in Ben ञो ऽदक्षिणीय; H u. Bb ञो ऽदक्षिणीय   5) So Ben; die andern Mss. °मीध्रे   6) M सुश्रुवा॰त्; Bb सुश्रवान्

दधाति वि स्वः पश्य[1] व्यन्तरिक्षमित्यदं[2] एवं प्राप्य वदति यंतस्व सदऽस्यै रित्यरातीयन्ति वा एत एतस्मै ददत ईश्वरा ब्राह्मणाः सोमपाश्चक्षुषापहन्तोस्तानेव[3] शमयत्यसंद्राता मधुमतीर्देवत्रा गछत प्रदातारमाविशतेति तथा हैनममुत्रागछन्ति बहुमर्या[4] यज्ञकुणपी-ति ह स्माह यज्ञवचा[5] राजस्तम्बायनः प्र वा इतो मनुष्या दक्षिणाभ्यावयन्ति नामुत्र गछन्तीति यदाहानवहायास्मान्देवयानेन पथा सुकृतां लोके सीदत तन्नः संस्कृतमिति तथा हैनमिह चामुत्र चागछन्ति ॥ २ ॥

Vgl. 1, 3, 37. — TS 6, 6, 1 (dâkshiṇâni); Kap. S. 44, 4.

घ्नन्ति[6] वा एतत्सोमं यदभिषुण्वन्ति यज्ञं वा एतद् घ्नन्ति यद्दक्षिणा दीयन्ते यज्ञं वा एतद्दक्षयन्ति तद्दक्षिणानां दक्षिणात्वं यत्तद्दक्षयन्ति स्वर्गो वै लोको माध्यंदिनं सवनं यन्माध्यंदिने सवने दक्षिणा दीयन्ते स्वर्गस्य लोकस्याक्रान्त्यै[7] बहु देयं सेतुं वा एतत्कुरुते स्वर्गस्य लोकस्य संमष्ट्यै हिरण्यं हस्ते भवत्यथ नयति सत्यं वै हिरण्यं सत्येनैवैना नयत्यग्रेण गार्हपत्यं जघनेन सदस्ता उदीचीरुत्सृजन्त्यन्तरा चात्वालं चाग्नीध्रं चै तेन वा अङ्गिरसः स्वर्गं लोकमायंस्तमेवैनाः पन्थामपिनयति द्वाभ्यां गार्हपत्ये जुहोतीमां तेनाक्रमत[8] आग्नेय्याग्नीध्रेऽन्तरिक्षं तेनाथ यद्दक्षिणा दीयन्ते[9] स्वर्गं तेन लोकमग्नीधेऽग्रे ददाति यज्ञमुखं वा अग्नीद्यज्ञमुखमेव नापाराध्यो अग्निर्वै सर्वा देवता देवता एवास्य तयाभीष्टाः प्रीता भवन्ति ब्रह्मणे

1) So corrigirt (cf. 1, 3, 37); in Ben स्वः पश्य; M स्वः पश्य; H u. Bb स्वः पश्य; desgl. B, ohne Accent. 2) Ben °त्यदं 3) M °तो स्तानेव 4) Die Mss. बहुर्मर्या; Bb बहुर्या 5) Bb यज्ञवचा 6) NB. fast dieses ganze 2. Capitel ist in Bb ohne Accente. 7) Von hier bis zum folgenden लोकस्य in H u. Bb doppelt. 8) Bb °क्रमत् 9) Ben दीयते

ददाति प्राजापत्यो वै ब्रह्मा प्रजापतिमेव तया प्रीणात्यृत्विग्भ्यो ददाति होत्रा एव तया प्रीणाति यां सदस्येभ्यो ददाति सोमपीथं तया निष्क्रीणीते यामार्षेयाय शुश्रुवुषे[1] ददाति छन्दांसि तया प्रीणाति न हि तस्मादर्हन्ति[2] सोमपीथं निष्क्रीय यामार्षेयाय शुश्रुवुषे[3] ददाति देवलोके तया ऋध्नोति यामनार्षेयाय[4] शुश्रुवुषे मनुष्यलोके तया यामप्रसृप्ताय[5] ददाति वनस्पतयस्तया प्रथन्ते यां याचमानाय ददाति भ्रातृव्यं तया जिन्वति[6] यां भीषा[7] स्वं[8] तया ब्रह्मास्ति[9] यां प्रतिनुदते सा व्याघ्री दक्षिणा यत्तां पुनः प्रतिगृह्णीयाद्व्याघ्र्येनं[10] भूता प्रव्लीनीयादन्यया[11] सह प्रतिगृह्या तया हैनं न प्रव्लीनाति[12] यदजं ददात्याग्नेयो वा अ३जो ऽग्नेरेव तेन प्रियं[13] धामोपैति[14] यदविं[15] ददात्य३व्यन्तेनापजयति[16] यद्गां ददाति वैश्वदेवी गौर्विश्वेषां देवानां तया प्रियं[17] धामोपैति[18] यद्वासो ददाति सर्वदेव३त्यं वै वासो देवता एवास्य तेनाभीष्टाः[19] प्रीता भवन्ति यत्कृतान्नं ददाति मांसं तेन निष्क्रीणीते यदनो वा रथं वा शरीरं तेन यद्धिरण्यं ददात्यायुस्तेन वर्षीयः कुरुते यदश्वं ददाति प्राजापत्यो वा अश्वः प्रजापतेरेव तेन प्रियं[20] धामोपैत्यथो अमुष्यादित्यस्य लोकं जयत्यन्ततः प्रतिहर्त्रे देयं रौद्रो वै प्रतिहर्ता यन्मध्यतः प्रतिहर्त्रे दद्यान्म-

---

1) So M, nur ohne Accent (n. Bl.); Ben शुश्रूवुषे; die andern Mss. शुश्रुवुषे 2) Bb °र्हहंति 3) Ben शुश्रूवुषे; Bb शुश्रुषुषे 4) So betont H; in Ben °मनार्षेयाय 5) Ben °सृप्ताय 6) H जिन्वंति 7) H u. Bb भिषा 8) Bb स्वं 9) In Ben eig. ब्रह्मास्ति geschrieben, dann ब्रह्मास्ति 10) So Ben; in H u. Bb व्याघ्रीयेनं; desgl. M (u. Bl.) u. B, ohne Accent. 11) So Ben u. M; in H, Bb u. B °व्लिनीयाद्° 12) Bb व्लीनाति 13) M u. B प्रीयं; Bb मीयं 14) H °मोपैति 15) M यद्वं; H यद्विं 16) Ben °यंति 17) Ben u. H प्रीयं; desgl. B, ohne Accent. 18) Ben °मोपैति 19) Ben तयाभीष्टाः; M एवास्यतेना° 20) Ben प्रीयं

ध्यतो रुद्रमन्ववनयेत्तस्माद्दन्ततः[1] प्रतिहर्त्रे देयꣳ स्वर्भानुर्वा आसुरः सूर्यं तमसाविध्यत्तमत्रिरन्वपश्यद्यदात्रेयाय हिरण्यं ददाति तम एवापहतेऽथो ज्योतिरुपरिष्टाद्दधाति स्वर्गस्य लोकस्यानुख्यात्यै[2] ॥ ३ ॥

Vgl. 1, 3, 37. — TS 6, 6, 1 (dâkshiṇâni); Kap. S. 44, 4 u. 5.

विश्वरूपो वा एतं त्वाष्ट्रो यज्ञस्य व्यृद्धममन्यत यदृक्सामे व्युह्येते स एतान्यपश्यद्यज्ञस्य[3] निष्कृत्यै यदेवात्र यज्ञस्य व्यृद्धं तस्यैतानि निष्कृत्यै हूयन्ते षड्ग्म्याणि[4] भवन्ति षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति त्रीणि यजूꣳषि त्रीणि वै[5] सवनानि सवनान्येवाप्नोति नवैतानि[6] समिष्टयजूꣳषि जुहोति नवभिर्बहिष्पवमाने स्तुवते तन्नव नव प्राणाः प्राणानेवात्मन्धत्त ऊर्ध्वस्तिष्ठञ्जुहोत्यूर्ध्वो हि तिष्ठन्वीर्यवत्तरो यं द्विष्यात्तस्य तूष्णीं तिष्ठञ्जुहुयात्प्राणानस्यान्तरेति संततं जुहोति प्राणानाꣳ संतत्या अविछिन्दञ्जुहोति प्राणानामविच्छेदाय यद्विछिन्द्यात्प्राणान्विछिन्द्याद्यं द्विष्यात्तस्य विछिन्द्यात्प्राणानस्य विछिनत्ति समानेन विग्राहं जुहोति समाना हीमे प्राणा यज्ञस्य वा एता आर्णी एतौ वै विश्वामित्रो यज्ञस्यार्णी अपश्यत्तद्यज्ञस्यैवैता आर्णी[7] क्रियेते[8] यतो यज्ञ आदीयते तत्पुनर्निधेया इति ह स्माह भरद्वाजो यतो वा एतद्यज्ञ आदीयते तत्पुनर्निधीयते[9] ॥ ४ ॥

Vgl. 1, 3, 38. — TS 6, 6, 2 (samishṭayajuḥ)

---

1) H u. Bb ॰वनयेत 2) So corrigirt; Ben u. B क्षात्यै; H u. Bb ॰ख्यात्यै; M (n. Bl.) ॰क्षात्यै 3) Bb एवात्र॰ 4) Die Mss. schwanken; Ben षडृग्म्याणि; in M eigentlich षर्डि ऋग्माणि geschrieben, in ऋग्म्याणि corrigirt; H u. Bb षडर्ग्माणि; B षड् ऋग्माणि 5) So Ben u. M; in H, Bb u. B fehlt das वै 6) H न वै तानि 7) H u. Bb चार्णी 8) So Ben; die andern Mss. क्रियते 9) H u. Bb निधी॰

पञ्चसवनो[1] वै यज्ञस्त्रीणि सवनान्यवभृथो[2]ऽनूबन्ध्या[3] सवनानां पञ्चमी पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभ्य यद्वै यज्ञस्यातिरिच्यते तद्वरुणो गृह्णात्यतिरिक्तं वा एतद्यज्ञस्य यदृजीषोऽधिषवणमधिषवणे तस्मादेनावभृथमभ्यवयन्त्य३पो[4] ऽभ्यवयन्त्यापो हि वरुणः स्थावरा अभ्यवयन्ति ता हि साक्षाद्वरुणो यद्वहन्तीरभ्यवेयुः पशूनिर्वहेयुरथ यत्स्थावरा अभ्यवयन्ति पशूनामनिर्वाहायापो वै वरुणो वातो वरुणो[5] यदुदञ्चो ऽवभृथमभ्यवेयुरभीपतः प्रजा वरुणो गृह्णीयादथ यद्दक्षिणावभृथमभ्यवयन्ति यजमानस्य निर्वरुणत्वायोरुं हि राजा वरुणश्चकारेति चात्वालात्प्रयन्तो वदन्त्येष[6] वा अपरिपरः पन्था अरक्षस्यो येनासा आदित्य एत्यमुष्य वा एतदादित्यस्य पथ इति[7] शतं ते राजन्भिषजः सहस्रमित्यपः पराहृश्य[8] वदन्त्यपो वा एतन्भूषन्ति[9] पूताभिराभिः पूताश्चरन्त्यैककपाला भवन्ति[10] न वै पुरुषः कपालैराप्य एकधैवैनमाप्नोत्यथो एका वा इयमस्यामेव प्रतितिष्ठति तृणं प्रास्य जुहोत्यग्निमत्येव जुहोत्यायतनवत्यन्धो ऽध्वर्युः स्याद्यदनायतने जुहुयादुपबर्हिषः प्रयाजान्यजति प्रजा वै बर्हिः प्रजा एव मृत्योरुत्सृजत्याज्यभागौ यजति यज्ञतायै वरुणं यजति निर्वरुणताया अग्नीवरुणौ[11] यजत्युभयत एवैनं वरुणान्मुञ्चति नानुयाजान्यजति[12] न संस्थापयन्त्यतिरिक्तमिव हि तन्मन्यन्ते[13] समुद्रे ते हृदयम-

---

1) So corrigirt; die Mss. पंचसवनो 2) H u. Bb °भृथो 3) Ben u. M नुबं° cf. 4, 8, 6. 4) H u. Bb तेनावभयमभ्यं° 5) H u. Bb वेवचो 6) M °प्रयंतो वंत्येष 7) So M: desgl. B, ohne Accent; H u. Bb पथ इति; Ben पथेति 8) So M, H u. Bb; in Ben परा हृश्य 9) So Ben u. M; in B भूषंता; in H u. Bb भूषंति 10) So M; die andern Mss. °कपालो भवति 11) Vgl. Pâ. 6, 3, 27; auch TS 6, 6, 3, 3; in Ben u. M steht अग्निवरुणौ 12) In H यजति ohne Accent. 13) So Ben u. M; die andern Mss. मन्यति

३प्सुमतोरिति सह स्रुचोपमारयति यदेवात्र क्रूरं क्रियते तच्छमयत्यवभृथ निचुङ्कुणेत्यवभृथ एवास्यैष ततो यं ऋजीषं उत्प्लवते तं भक्षयन्ति सोमपीथमिव हि तन्मन्यन्ते वरुणो वा ऋजीषो यद्भक्षयेद्वरुणमात्मन्यञ्जीत तदाहुर्भक्षयितव्यमेवेति पशवो वा ऋजीषः पशूनेवात्मन्यङ्क्त इति विचृत्तो वरुणस्य पाश इति वरुणपाशमेव विष्यति प्रत्यस्तो वरुणस्य पाश इति वरुणपाशमेव प्रत्यस्यति नमो वरुणस्य पाशायेति वरुणपाशायैव नमो ऽकरङ्गिरसो वा उत्तिष्ठतो रक्षांस्यनूदतिष्ठंस्तान्वा एतेन बृहस्पतिरन्ववैत्स तेभ्यो रक्षांस्यपाहन्यदेतेनान्ववैति रक्षसामपहत्यै यदूर्ध्वस्तोभं तेन बार्हस्पत्यमेष यत्त्रिस्तोभं त्रयो वा इमे लोका एभ्यो वा एतल्लोकेभ्यो[2] यज्ञाद्रक्षांस्यपहन्ति यदतिछन्दसा सर्वाणि वै छन्दांस्यतिछन्दाः सर्वैर्वा एतच्छन्दोभिर्यज्ञाद्रक्षांस्यपहन्ति यदाग्नेय्याग्निर्वै सर्वा देवताः सर्वाभिर्वा एतद्देवताभिर्यज्ञाद्रक्षांस्यपहन्त्यपो ऽभ्यवयन्त्यापो वै रक्षोघ्नीरपो रक्षांसि न तरन्ति रक्षसामपहत्या अनपेक्षमाणा[3] आयन्ति वरुणस्यानन्ववायाय परोगोष्ठं मार्जयन्ते परोगोष्ठमेव वरुणं निरवदयन्त एधो ऽस्येधिषीमहीति निर्वरुणा एव भूत्वैधितुमुपयन्ति समिदसि समेधिषीमहीति समिद्धा एव ॥ ५ ॥

Vgl. 1, 8, 39. — TS 6, 6, 3 (avabhṛthaḥ); Kap. S. 45, 5.

यः कामयेत सर्वो मे यज्ञः स्यात्सरसा इति स एतास्तिस्रो वशा आलभेत यज्ञस्य सर्वत्वायाथो सरसत्वाय वैश्वदेवीं मध्यत आलभेत रेतो वा एतन्मध्यतो दधाति मध्यतो हि रेतो ऽनिरुक्तया प्रचरन्त्य-

---

1) Bb °चति 2) So corrigirt; die Mss. एतं लोकेभ्यो 3) M °अनपेक्षमाणा 4) Ben °यन्तो

निरुक्तमिव[1] हि रेतो यातयाम वा एतस्य[2] देवताश्च ब्रह्म च यद्वैश्वदेवी च बार्हस्पत्या च वशे भवतो देवतानां च ब्रह्मणश्चायातयामत्वाय दुग्धानि वा एतस्य छन्दांसि यातयामानि भवन्ति छन्दस्येव[3] रसं दधाति[4] बार्हस्पत्यामन्ततः आलभेत ब्रह्म वै बृहस्पतिर्ब्रह्मणि[5] वा एतदन्ततो यज्ञस्य यजमानः प्रतितिष्ठति यद्वै यज्ञः संतिष्ठते मित्रो ऽस्य स्विष्टं युवते वरुणो दुरिष्टं यन्मैत्रावरुण्यनूबन्ध्या भवति मित्रेण वा एतन्मित्राद्यज्ञस्य स्विष्टं मुञ्चति वरुणेन वरुणाद्दुरिष्टमुभयत एनं मुक्त्वा यजमानाय प्रयच्छति यथा वै लाङ्गलेनोर्वरां[6] प्रभिन्दन्त्येवमुक्थामदानि यज्ञं प्रभिन्दन्ति यथा मत्यमन्ववास्यत्येवमेषा यज्ञस्य यद्दुष्टुतं यद्दुःशस्तं यद्विलोमं[7] तदेतया[8] कल्पयति विदेवो वा ईजानः संदेवो ऽनीजानो[9] ना ह्यनीजाने[10] देवताः शंसन्ते यथा वा अनड्वान्विमुक्तो ऽपक्रामत्येवमीजानाद्देवता[11] अपक्रामन्ति यदाग्नेय उदवसानीयो भवत्यग्निर्वै सर्वा देवता देवता एव पुनरालभते ऽष्टाकपालो भवति गायत्रो ह्यग्निर्गायत्रछन्दाः पञ्चकपालः कार्यः पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालब्ध यत्र वा अदो ऽग्नौ पुरुषं प्रमीतमादधति तदेनमभि सत्यं सर्वा एनमन्या देवता जहत्यग्निरेनं देवतानां न जहाति ॥ ६ ॥

Vgl. Kap. S. 45, 6.

प्र वा ऋचा ह प्रयच्छति यजुषा गमयति ग्रहेण स्तोत्राय वा

---

1) Bb °र्त्तातिरिक्तमिव 2) M (n. Bl.) एतस्य 3) Bb छन्दस्येव 4) M (n. Bl.) °च संदधाति 5) Ben ब्रह्मणी; H ब्रह्मणि 6) H °नोर्वरां 7) So Ben; desgl. M (n. Bl.) ohne Accent; in H u. Bb विलोम; desgl. B, ohne Accent. 8) Bb तदेवं तया 9) Ben u. M °निजाना 10) Ben ना ह्यनिजा; M (n. Bl.) ना ह्यनिजाने; in H u. Bb नाह्यनीजाने; desgl. B, ohne Accent. 11) Ben द्देवताद्

ऋक्शस्त्वाय यजुः संबद्धे[1] वै स्तोमं च शस्त्रं च संबद्धे[2] ऋक् च यजुश्चोच्चैर्ऋचा क्रियत उच्चैः साम्नोपांशु यजुषा ते देवा अमन्यन्तेदं यज्ञस्य शिथिरमिति तत्पुरोरुचमुपादधुरशिथिरत्वाय देवता वै सर्वा आशंसन्ते ग्रहे गृह्यमाणे मह्यं गृह्णाति मह्यं गृह्णातीति यत्पुरोरुग्देवतानां व्यावृत्त्यै ॥ जीवा नाम स्थ ता इमं जीवयत जीविका[3] नाम स्थ ता इमं जीवयत संजीवा नाम स्थ ता इमं संजीवयत ॥ इति यवानेकविंशतिं दर्भपिञ्जूलानि चावधाय परिब्रूयादथाभिमन्त्रयेत ॥ प्राणापानौ त उपांश्वन्तर्यामौ पातां व्यानं त उपांशुसवनः पातु वाचं त ऐन्द्रवायवः पातु दक्षक्रतू[4] ते मैत्रावरुणः पातु श्रोत्रं त आश्विनः[5] पातु[6] चक्षुषी ते शुक्रामन्थिनौ पातामात्मानं त आग्रायणः पात्वङ्गानि त उक्थ्यः पात्वायुस्ते ध्रुवः पातु स्तनौ त ऋतुपात्रे पातां मूर्धानं ते द्रोणकलशः पातु कुक्षी ते कलशौ पातां पुष्टपते चक्षुषे चक्षुः स्तने स्तनं वाचे वाचं प्राणाय प्राणं पुनर्देह्यस्मै स्वाहा ॥ इति जुहुयादेतद्ध स्म[7] वा आह वासिष्ठः सात्यहव्यः पात्रेषु वा अहं तद्ब्राह्मणं[8] वेद यथा पुरुषः सकृदाहुतिमाहुर्यते[9] सकृ३त्त्वेव कुर्यान्न ततः[10] पुरो यत्पुनः कुर्यात्प्रमीयेत यद्यभिचरेदेतदेव यजुरुदित्वाथाभिमन्त्रयेत ॥ पुनरितरथा ॥ ७ ॥

---

1) So Ben; in M संबध्य (n. Bl.); Bb संबधी; B संबधे; H संबधे 2) Die Mss schwanken; Ben संबद्धो; M (n. Bl.) संबध्य; in Bb u. H संबधे; desgl. B, ohne Accent. 3) Ben जीवीका 4) So Ben u. M; die andern Mss. दक्षक्रतू 5) So Ben u. M; in Bb श्रोत्रमाश्विनः; H श्रोत्रं त्वाश्विनः; desgl. B, ohne Accent. 6) Von hier bis zum folgenden पात्वङ्गानि in Ben fehlend. 7) Ben स्मा 8) So Ben u. M; in H u. Bb ब्राह्मणं 9) So Ben; in M सकृदाहितिमाहर्यते; in H u. Bb सकृदाहुतिमाहुर्यते; desgl. B, ohne Accent. 10) So Ben u. M; die andern Mss. कुर्यात्ततः

पुनरन्यानि पात्राणि प्रयुज्यन्ते नान्यानि यानि पुनः प्रयुज्यन्ते तान्यस्मै[1] लोकाय यानि न पुनः प्रयुज्यन्ते तान्यमुष्मै लोकायाथैतदुक्थ्यपात्रं पुनः प्रयुज्यत आरण्यान्वा एतत्पशून्प्रत्यारण्यानेवैतेन पशून्दाधार यदेतत्पुनः प्रयुज्यते तस्मादेतान्पश्यतः परीत्य यन्त्यथैतदृतुपात्रं पुनः प्रयुज्यते ऽश्वं[2] वा एतत्प्रत्यश्वमेवैतेन दाधार यदेतत्पुनः प्रयुज्यते तस्मादेतस्याश्वस्यैवाधस्ताच्छफौ ऽथैतदादित्यपात्रं पुनः प्रयुज्यते गां वा एतत्प्रति गामेवैतेन दाधार यद्भूयिष्ठाभिर्ऋग्भिर्भूयिष्ठः सोमो गृह्यते तस्माद्गौर्हन्यमानाद्धन्यमाना पशूनां भूयिष्ठाथैतच्छुक्रपात्रं पुनः प्रयुज्यते पुरुषं वा एतत्प्रति पुरुषमेवैतेन दाधारासौ वा आदित्यः शुक्रो रश्मय ऋतवो ऽन्तरमृतुपात्रं शुक्रपात्रं पुनः प्रयुज्यते[3] ऽन्तरे ह्यमुष्मादादित्याद्रश्मयो[4] ऽथैतदुपांशुपात्रं पुनः प्रयुज्यते ऽविं वा एतत्प्रत्यविमेवैतेन दाधाराथैतदन्तर्यामपात्रं पुनः प्रयुज्यते ऽजां वा एतत्प्रत्यजामेवैतेन दाधार प्रजापतिर्वा आग्रयणो[5] यदेष पुनः प्रयुज्यते तस्मात्प्रजापतिः[6] प्रजा वेद प्रजापतेर्वा एतत्पशवो यद्द्रोणकलशो यदेष पुनः प्रयुज्यते तस्मादयं क्षयो ऽस्ति सप्त वै पात्राणि पुनः प्रयोगमर्हन्ति[7] तानि हि बन्धुमन्ति सप्त छन्दांसि छन्दांसि वाग्यावत्येव वाक्तामाप्नोति सप्त छन्दांसि सप्त होत्राः सप्त ग्राम्याः पशवस्तानेवावरुन्द्धे त्रीणि वै पात्राणि प्रत्यक्षबन्धूनि परोक्षबन्ध्वेवान्यत्सर्वं[8] गायत्र्यैन्द्रवायवस्त्रिष्टुप्[9] शुक्रो जगत्या-

---

1) Ben लोकाय न  2) H u. Bb °ऽश्वं ohne Accent.  3) B प्रयुञ्जीत  4) So M; H प्रयुज्यते तरे; Bb प्रयुज्यते तरे; B प्रयुञ्जीतेतरे; in Ben शुक्रपात्रात्पुनः प्रयुज्यते तरे  5) Bb ग्रायणयो  6) Von तस्मात् bis zum folgenden तस्मा° in Ben nicht vorhanden; in H u. Bb dagegen ist dieses Stück drei Mal nach einander wiederholt!  7) So in M, H u. Bb; in Ben °मर्हन्ति  8) So meine Correctur; die Mss. परोक्षबन्धवेवान्यत्सर्वं  9) So M u. H; in Ben u. Bb गायत्र्यैन्द्र°

ायणो ऽच्छिन्नं[1] स्रावयितव्यः[2] कामो ह्यस्य समर्धुको भवत्यथो
ाजीमूतवर्षी पर्जन्यो भवति न चमसमभ्युपाकुर्याद्यच्चमसमभ्युपा-
ुर्याद्गर्भमृतः[3] प्रजाः स्युर्येनैवाग्रे सर्पन्ति तेन पुनः सर्पेयुर्यदन्येन
र्पेयुर्गर्भा वेष्टुकाः[4] स्युर्यूपेन[5] वा आहुतयः स्वर्गं लोकं यन्त्यध्वर्युणा[6]
क्षिणा ऊर्ध्वो यूपो मीयत ऊर्ध्वस्तिष्ठन्प्रतिगृणाति स्वर्गस्य लोकस्य
मष्ट्यै ॥ ८ ॥

'gl. TS 6, 5, 11 (somapâtrâdipraçaṃsâ).

यो ज्येष्ठबन्धुः स्यात्स[7] ऐन्द्रवायवाग्रान्ग्रहान्गृह्णीताग्र्यं ह्यैन्द्रवा-
यवो य[8] आमयावी स[9] मैत्रावरुणाग्रान्प्राणापानौ हि मित्रावरुणौ
ः पश्चात्सोमपीथः स आश्विनाग्रान्पश्चेव[10] ह्येतौ सोमपीथमाश्नु-
ाता यो ब्रह्मवर्चसकामः स शुक्राग्रांस्तेजो वै शुक्रो ब्रह्मवर्चसं
ो[11] ऽभिचरेत्स मन्थ्यग्रानार्तं[12] वा एतत्पात्रं यन्मन्थिपात्रं य आ-
ुजावरः[13] स आग्रायणाग्रानन्य[14] आग्रायणा[15] एति वा एष यज्ञमुखाद्य
ऐन्द्रवायवेभ्यो ग्रहेभ्यो ऽन्याग्रान्ग्रहान्गृह्णीते धारयेयुस्तं यं का-
माय गृह्णीयादथैन्द्रवायवं सादयेद्यथापूर्वं[16] वा एतत्क्रियते[17] न
यज्ञमुखादिति यद्याग्रायणः स्कन्देदुप वा दस्येदितरेभ्यो ग्रहेभ्यो निर्गृह्णी-
याद्यथा पिता पुत्रान्क्षित उपधावत्येवं[18] तद्यदीतरे[19] ग्रहाः स्कन्देयुरुप

---

1) M, H u. Bb छिन्नं 2) So Ben; die andern Mss. स्रावितव्यः 3) Ben गर्भमृत; Bb गर्भमभृत 4) Bb वेष्टुका 5) So Ben; in M eigentlich यूपेन geschrieben; dann in यूपेन corrigirt; Bb यूपेन; desgl. B, ohne Accent; H यूपेन 6) H u. Bb संश॰ 7) In Bb fehlt स 8) In Bb fehlt य 9) So corrigirt; in Ben स; in M, H, Bb सो; desgl. B, ohne Accent. 10) So meine Correctur; die Mss. पश्चेव; M पश्चेव 11) So corrigirt; in M यो ohne Accent; die andern Mss. यो 12) So corrigirt; in M, H u. Bb मंथ्यग्राम॰; Ben मथ्यग्राम॰; desgl. B, ohne Accent. 13) H चतु॰ 14) H, Bb u. B चायण॰ 15) Bb ग्रायणं 16) So Ben u. M; die andern Mss. सादयेत य॰ 17) Ben क्रियते 18) Ben u. M उपधावत्येवं 19) M यदितरे

